३०—भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ अ० ३।१।१२॥

अच्व्यन्तेभ्यो भृशादिप्रातिपदिकेभ्यो भवत्यर्थे क्यङ् प्रत्ययो भवति हलन्तानां चान्त्यलोपः। अभृशो भृशो भवतीति भृशायते, सुमनायते। अच्वेरिति किम्—भृशीभवति। अत्र मा भूत्।

३१—भृशादि—भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्। वेहत्। नृषत्। शुधि। अधर। ओजस्। वर्चस्। विमनस्। रमन्। इम्। गोहस्। शुचिस्। अजरस्। इति भृशादयः।

३१—लोहितादिडाज्भ्यः क्यष् ॥ अ० ३।१।१३॥

अच्व्यन्तेभ्यो लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। अलोहितो लोहितो भवति लोहितायते, लोहितायति; अपटपटा पटपटा भवति पटपटायते, पटपटायति।

३२—लोहितादि—लोहित। नील। हरित। पीत। मद्र। फेन। मन्द। इति लोहितादयः॥

आकृतिगणत्वात्—वर्मन्। निद्रा। करुणा। कृपा॥

*[३२—सुखादिभ्यः कर्तृवेदनायाम् ॥ अ० ३।१।१८॥

सुख इत्येवमादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत् कर्तुः सम्बन्धीनि सुखादीनि भवन्ति। सुखं वेदयते सुखायते, दुःखायते। कर्तृग्रहणं किम्—सुखं वेदयति प्रसाधको देवदत्तस्य।

३३—सुखादि—सुख। दुःख। तृप्त। तीव्र। गहन। कृच्छ्र। अस्र। अलीक। प्रतीप। करुण। कृपण। सोढ। इति सुखादयः।

३३—कण्ड्वादिभ्यो यक्। अ० ३।१।२७॥

कण्डूञ् इत्येवमादिभ्यो यक् भवति। कण्डूयति, कण्डूयते।

* इत आरभ्यासहहिंशत्सूत्रगणं द्वि० प० संस्करणे नासन्। यु० मी०।

३४ कण्ड्वादि—कण्डूञ् । मन्तु । हृणीङ् । वल्गु । अस्त । मनस् । महीङ् । लेट् । लोट् । इरस् । इरज् । इरञ् । दुवस् । मेधा । कुषुभ । मगध । तन्तस् । पम्पस् । सुख । दुःख । सपर । अरर । भिषज् । भिष्णज् । इषुध । चरण । चुरण । भुरण । तुरण । गद्गद । एला । केला । खेला । लिट् । लोट् । असुञ् । हृणीङ् । हृपय । पुरण । इति कण्ड्वादयः ॥

३४—नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ अ० ३।१।१३४।

नन्द्यादिभ्यो ग्रहादिभ्यः पचादिभ्यश्च धातुभ्यो यथासंख्यं ल्यु-णिनि-अच् इत्येते प्रत्यया भवन्ति । नन्दनः, वासनः । ग्राही, उत्साही । पचः, वचः ।

३५—नन्द्यादि——नन्दिवासिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् ॥ नन्दनः । वासनः । मदनः । दूषणः । साधनः । वर्धनः । शोभनः । रोचनः ॥ सहितपिदमेः संज्ञायाम् ॥ सहनः । तपनः । दमनः । जल्पनः । रमणः । दर्पणः । संक्रन्दनः । संकर्षणः । संहर्षणः । जनार्दनः । यवनः । पवनः । मधुसूदनः । विभीषणः । लवणः (निपातनाण्णत्वम्) । चित्तविनाशनः । कुलदमनः । शत्रुदमनः । इति नन्द्यादयः ॥

३६—ग्राह्यादि—ग्राही । उत्साही । उद्दासी । उद्भासी । स्थायी । मन्त्री । संमर्दी ॥ रक्षश्रुवसवपशां नौ ॥ निरक्षी । निश्रावी । निवासी । निवापी । निशायी ॥ याचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम् ॥ अयाची । अव्याहारी । असंव्याहारी । अव्राजी । अवादी । अवासी ॥ अचामचित्तकर्तृकाणाम् ॥ अकारी । अहारी । अविनायी । अविशायी । विशायी ॥ विषयी देशे ॥ विषयी देशः ॥ अभिभावी भूते ॥ अभिभावी । अपराधी । उपरोधी । परिभावी । परिभवी । इति ग्राह्यादयः ॥

३७—पचादि—पच । वप । वद । चल । तप । पत । नदट् ।

भपट् । वस । गरट् । प्लवट् । तरट् । चोरट् । ग्राहट् । जर । मर । स्तर । तम । सूदट् । देवट् । मारट् । सेव । मष । क्रोध । मेधानर्त । व्रण । दर्श । दश । दम्भ । जारभर । श्वपच । इति पचादयः ॥]

३५—भविष्यति गम्यादयः ॥ ३ । ३ । ३ ॥

गम्यादयः शब्दा भविष्यति काले साधवो भवन्ति । ग्रामगमी ।

३८—गम्यादि-गमी । आगामी । प्रस्थायी । प्रतिरोधी । प्रतिबोधी । प्रतियोधी । प्रतियागी । प्रतियायी । आयायी । भावी । इति गम्यादयः ॥

३६—षिद्भिदादिभ्योऽङ् ॥ अ० ३ । ३ । १०४ ॥

षिद्भ्यो भिदादिभ्यश्च धातुभ्यः स्त्रियामङ् प्रत्ययो भवति । जॄष्-जरा, त्रपा । भिदादयः पठ्यन्ते ।

३९—भिदादि-भिदा (१) । छिदा । विदा । क्षिपा । गुहा गिर्योषध्योः ॥ श्रद्धा । मेधा । गोधा । आरा । हारा । कारा । क्षिया । भारा । धारा । रेखा । लेखा । चूडा । पीडा । वपा । वसा । सृजा ॥ क्रपे सम्प्रसारणं च ॥ कृपा ॥ भिदा विदारणे ॥ छिदा द्वैधीकरणे ॥ आरा शस्त्र्याम् ॥ धारा प्रपाते ॥ इति भिदादयः ॥

३७—वा०—सम्पदादिभ्यः क्विप् (२) ॥ अ० ३ । ३ । १०८ ॥

४०—सम्पदादि-सम्पत् । विपत् । प्रतिपत् । आपत् । परिषत् । इति सम्पदादयः ॥

## ३८—भीमादयोऽपादाने ॥ अ० ३ । ४ । ७४ ॥

भीमादयः शब्दा उणादिरूपा अपादानकारके निपात्यन्ते ।

४१—भीमादि—भीमः । भीष्मः । भयानकः । वरुः । चरुः । भूमिः । रजः । संस्कारः । संक्रन्दनः । प्रपतनः । समुद्रः । स्रुवः । स्रुक् । खलतिः ॥ इति भीमादयः ॥

## ३९—अजाद्यतष्टाप् ॥ अ० ४ । १ । ४ ॥

अजादिभ्यः प्रातिपदिकेभ्योऽकारान्ताच्च स्त्रियां टाप् प्रत्ययो भवति । अजा, देवदत्ता । अदिति तपरकरणं तत्कालार्थम् । कीलालपाः ब्राह्मणी । अत्र टाप् न भवति । अजादिग्रहणं तु जात्यादिलक्षणस्य ङीषादेर्बाधनार्थम् ।

४२—अजादि—अजा । एडका । चटका । अश्वा । मूषिका (१) । बाला । होढा । पाका । वत्सा मन्दा । विलाता (२) । पूर्वापहाणा । अपरापहाणा (३) ॥ संभस्त्राजिनशणपिण्डेभ्यः फलात् ॥ संफला । (४) भस्त्रफला । अजिनफला । शणफला । पिण्डफला ॥ त्रिफला द्विगौ ॥ त्रिफला ॥ सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् ॥ (४) सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । एकपुष्पा ॥ शूद्रा चामहत्पूर्वा जातिः (५) ॥ क्रुञ्चा । उष्णिहा ।

---

(१) अजादिभ्यः पञ्चभ्यो जातिलक्षणो यो ङीष् प्राप्तः स बाध्यते ।

(२) बालादिभ्यः पञ्चभ्यो वयसि ङीप् प्राप्तः ॥

(३) आभ्यां णिल्लक्षणो ङीप् प्राप्तः ॥

(४) सभादिभ्य फलात्, सदादिभ्यश्च पुष्पात् (द० स्त्रै० १००) बहुव्रीहौ च 'पाककर्ण' (स्त्रै० ११६) इति सूत्रेण ङीष् प्राप्तः स बाध्यते ॥

(५) अमहत्पूर्वाच्छूद्रशब्दाज्जातौ टाप् । शूद्रा । पुंयोगे तु ङीषेव । शूद्रस्य स्त्री शूद्री । अमहदिति किम्—महाशूद्री ॥

देवविशा। (१)। ज्येष्ठा। कनिष्ठा। मध्यमा (२)। कोकिला (३)॥ मूलान्नञः॥ अमूला (४)। इत्यजादयः॥

४०—न षट्स्वस्रादिभ्यः॥ अ० ४।१।१०॥

षट्संज्ञकेभ्य स्वस्रादिभ्यश्च प्रतिपादिकेभ्यः स्त्रीप्रत्ययो न भवति। सप्त, अष्ट, स्वसा॥

४३—स्वस्रादि—स्वसा। दुहिता। ननान्दा। याता। माता। तिस्र। चतस्र। इति स्वस्रादयः॥

४१—नित्यं सपत्न्यादिषु॥ अ० ४।१।३५॥

सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति। समानः पतिरस्याः सपत्नी, एक पत्नी॥

४४—सपत्न्यादि—समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र॥ दासाच्छन्दसि॥ इति सपत्न्यादयः॥

४२—पिद्गौरादिभ्यश्च॥ अ० ४।१।४१॥

पिद्भ्यो गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति। नर्त्तकी, खनकी, रजकी। गौरादिभ्यः—गौरी, मत्सी।

४५—गौरादि—गौर। मत्स्य। मनुष्य। शृङ्ग। हय। गवय। मुकय। ऋष्य। पुट। द्रुण। द्रोण। हरिण। कण। पटर। उकण। आमलक। कुवल। बदर। बिम्ब। तर्कार। शर्कार। पुष्कर। शिखण्ड। सुषम। सलन्द। गडुज। आनन्द। सृपाट। सृगेठ।

---

(१) कुञ्चादिभ्यस्त्रिभ्योऽप्राप्तष्टाब्विधि॥

(२) ज्येष्ठादिभ्यस्त्रिभ्यः पुंयोगे ङीष् प्राप्तोऽनेन बाध्यते। ज्येष्ठस्य भार्या ज्येष्ठा॥

(३) कोकिलशब्दाज्जातिलक्षणो ङीष् प्राप्त.॥

(४) मूलशब्दाद् बहुव्रीहौ 'पाककर्ण' [ वा० ११६ ] इति ङीष्। नास्तिमूलमस्या सा अमूला।

आढक । शष्कुल । सूर्म । सुव । सूर्य । पूष । मूष । घातक । सक्लूक । सल्लक । मालक । मालत । साल्वक । वेतस । अतस । पृस । मह । मठ । छेद । श्वन् । तक्षन् । अनडुही । अनड्वाही ॥ एषण, करणे ॥ देह । काकादन । गवादन । तेजन । रजन । लवण । पान । मेध । गौतम । आय । स्थूण । भौरि । भौलिक । भौलिङ्गि । औद्गाहमानि । आलिङ्गि । आपिच्छिक । आरट । टोट । नट । नाट । मूलाट । शातन । पातन । पानन । आस्तरण । अधिकरण । एत । अधिकार । आग्रहायणी । प्रत्यवरोहिणी । सेचन ॥ सुमङ्गलात् संज्ञायाम् ॥ सुन्दर । मण्डल । पट । पिण्ड । विटङ्क । कुर्द । गूर्द । पाण्ड । लोमपाण्ड । कन्दर । कन्दल । तरुण । तलुन । बृहत् । महत् । सौधर्म ॥ रोहिणी, नक्षत्रे ॥ रेवती, नक्षत्रे ॥ विकल । निष्फल । पुष्कल ॥ कटाच्छ्रोणिवचने ॥ पिङ्गल । भट्ट । दहन । कन्द । काकण ॥ पिप्पल्यादयश्च ॥ पिप्पली । हरीतकी । कोशातकी । शमी । करीरी । पृथिवी । क्रोष्ट्री । मातामह (१) । पितामह । इति गौरादयः ॥

## ३४—बह्वादिभ्यश्च ॥ अ० ४ । १ । ४५ ॥

बह्वादिप्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति । बह्वी, बहुः ॥

४६—बह्वादि—बहु । पद्धति । अञ्चति । अंहति । वंहति । शकटि ॥ शक्तिः शस्त्रे ॥ शारि । वारि । गति । अहि ।

(१) अत्र मातामह प्रत्ययस्य षित्वादेव ( अत्र "मातरि षिच्च" वा० २१० इति वार्तिकेन षिद्भवति ) ङीषि सिद्धे पुनः पाठेन पितामहस्य ङीषोऽनित्यत्वं ज्ञाप्यते, तेन दंष्ट्रा, इति सिद्धं भवति । [illegible] औणादिकः पितच्प्रत्ययस्य ( उ० १ । १५० ) षित्वान्ङीषि सिद्धे उणादीनामव्युत्पन्नपक्षज्ञापनार्थः पाठः ॥

कपि । मुनि । यष्टि ॥ इत प्राण्यङ्गात् ॥ कृदिकारादक्तिन ॥ सर्वतोऽक्तिन्नर्थादित्येके (१) । चण्ड । अराल । कमल । कृपाण । विकट । विशाल । विशङ्कट । भरुज । ध्वज ॥ चन्द्रभागान्नद्याम् ॥ चन्द्रभागा । कल्याण । उदार । पुराण । अहन् ॥ इति बह्वादय ॥

## ४४—न क्रोडादिबह्वचः ॥ अ० ४ । १ । ५६ ॥

क्रोडाद्यन्ताद् बह्वजन्ताच्च प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति । स्वाङ्गादिति प्राप्त प्रतिषिध्यते । शोभनक्रोडा, शोभनखुरा, पृथुजघना ।

४७—क्रोडादि—क्रोड । खुर । बाल । शफ । गुद । घोण । नख । गुल्फ । मुख । भग । गल । आकृतिगणोऽयम् । इति क्रोडादय ॥

## ४५—शार्ङ्गरवाद्यञो ङीन् ॥ अ० ४ । १ । ७३ ॥

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यश्च स्त्रियां ङीन् प्रत्ययो भवति । शार्ङ्गरवी, बैदी । जातिग्रहणमत्रानुवर्तते तत्र जातिलक्षणो ङीषनेन बाध्यत, न पुयोगलक्षण ।

४८—शार्ङ्गरवादि—शार्ङ्गरव । कापटव । गौगुलव । ब्राह्मण । गौतम । कामण्डलेय । ब्राह्मकृतेय । आनिचेय । आनिधेय । आशोकेय । वात्स्यायन । मौञ्जायन । कैकसेय । काव्य । शैव्य । एहि । पर्येहि । आश्मरथ्य । औदपान । अराल । चण्डाल । वतण्ड । भोगवद्गौरिमतो संज्ञायाम् ॥ भोगवती, गौरिमती ॥ नृनरयोर्वृद्धिश्च ॥ नारी । इति शार्ङ्गरवादय ।

---

(१) इकारान्तात् प्राण्यङ्गवाचकान्ङीप् भवति । अङ्गुली । इकारान्तात् कृदन्तात् स्त्रियां ङीप् । कृपी, भूमी, वापी । कर्पाविग्रहे क्तिच्-प्रत्ययस्यादिकारान्तमात्रादेव ङीप् न भवति । तदा कृपि, वापिः इत्येव ॥

४६—कौड्यादिभ्यश्च ॥ अ० ४ । १ । ८० ॥

कौड्यादिप्रातिपदिकेभ्य स्त्रियां ष्यङ् प्रत्ययो भवति । अगुरूपोत्तमार्थ आरम्भ । कौड्या । लाड्या ।

४९—कौड्यादि—कौडि । लाडि । व्याडि । आपिशलि । आपक्षिति । चौपयत । चैटयत । शैकयत । वैल्वयत । वैकल्पयत । सौधातकि ॥ सूतात् युवत्याम् ॥ सूत्या युवति ॥ भोज क्षत्रिये ॥ भोज्या क्षत्रिया । भौरिकि । भौलिकि । शाल्मलि । शालास्थलि । कापिष्ठलि । गौलक्ष्य । गौकक्ष्य ॥ इति कौड्यादय ॥

४७—अश्वपत्यादिभ्यश्च ॥ अ० ४ । १ । ८४ ॥

अश्वपत्यादिप्रातिपदिकेभ्य प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति । पत्युत्तरपदात् प्राप्तस्य ण्यस्यापवाद । आश्वपतम्, शातपतम् ।

५०—अश्वपत्यादि—अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । धान्यपति । पशुपति । धर्मपति । सभापति । प्राणपति । क्षेत्रपति । स्थानपति । यज्ञपति । धन्वपति । अधिपति । बन्धुपति । इत्यश्वपत्यादय ॥

४८—उत्सादिभ्योऽञ् ॥ अ० ४ । १ । ८६ ॥

उत्सादिभ्य प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति । औत्स, औदपान । अणुत्सदपवादानां च बाधक ।

५१—उत्सादि—उत्स । उदपान । विकर । विनोद । महानद । महानस । महाप्राण । तरुण । तलुन ॥ बष्कयासे ( १ ) ॥ धेनु । पृथिवी । पङ्क्ति । जगती । त्रिष्टुप् । अनुष्टुप् । जनपद । भरत । उशीनर । ग्रीष्म । पीलु । कुल ॥ उदस्थान, देशे (२) ॥ पृष, दंश ॥

---

( १ ) बष्कयशब्दादसे [ असमासे ] इत्यत्र केवलादेवाञ् । तदन्तात्-त्वणेव भवति ॥

( २ ) उदस्थानशब्हाद्देशे पृथक्, अन्यार्थेऽणेव भवति । पृष-मन्यत्रापि ॥

भल्लकीय। रथन्तर। मध्यन्दिन्। बृहत्। महत्। सत्वन्तु (१)॥ कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुप्। सुवर्ण। सुपर्ण। देव॥ ग्रीष्मादच्छन्दसि (२)॥ इत्युत्सादयः॥

## ४६–बाह्वादिभ्यश्च ॥ अ० ४। १। ९६ ॥

बाह्वादिशब्देभ्योऽपत्यसामान्ये इञ् प्रत्ययो भवति। बाहोरपत्यं बाहविः, सौमित्रिः। इत्यादि।

५२—बाह्वादि—बाहु। उपबाहु। विवाकु। शिवाकु। वटाकु। उपबिन्दु। वृक। चूडाला। मूषिका। बलाका। भगला। छगला। ध्रुवका। धुवका। सुमित्रा। दुर्मित्रा। पुष्करसत्। अनुहरत्। देवशर्मन्। अग्निशर्मन्। कुनामन्। सुनामन्। पञ्चन्। सप्तन्। अष्टन्॥ अमितौजसः सलोपश्च (३)॥ उदञ्चु। शिरस्। शराविन्। क्षेमवृद्धिन्। शृङ्खलातोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त। कृष्ण। सलक। युधिष्ठिर। अर्जुन। साम्ब। गद। प्रद्युम्न। राम॥ उदङ्कः संज्ञायाम्॥ सम्भूयोऽम्भसोः सलोपश्च (४)॥ निवाकु। अवाकु। बिन्दु। चूडा। वृकला। भद्रशर्मन्। सुशर्मन्। सुधावन्। माष। आकृतिगणोऽयम् (५)॥ इति बाह्वादयः॥

---

(१) अत्र सत् शब्दान्तमनु—सत्वन्, तु, अव्ययम्। सात्वतोऽपत्यं सात्वताः॥

(२) अत्र छन्दस् शब्देन सूत्रं गृह्यते, न तु वेदः। सतोऽस्य ग्राम॥

(३) अमितौजसोऽपत्यमामितौजिः॥

(४) सम्भूयसोऽपत्यं साम्भूयिः। आम्भिः॥

(५) गृहस्थेन चकारेणात्राऽऽकृतिगणत्वं बोध्यते। तेन जाम्बिः, ऐन्द्रशर्मि, आजधेनविः, आजबन्धविः, औडुलोमिः। इत्यादीनामपि सिद्धो भवति॥

### ५०—गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ अ० ४ । १ । ९८ ॥

गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति । इञोऽपवादः । कुञ्जस्य गोत्रापत्यं कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः । स्वार्थे ञ्यस्तस्य तद्राजत्वाद् बहुषु लुक् । गोत्र इति किम्—कुञ्जस्यानन्तरापत्यं कौञ्जिः ।

५३—कुञ्जादि—कुञ्ज । ब्रध्न । शङ्ख । भस्मन् । गण लोमन् । शठ । शाक । शाकट । शुण्डा । शुभ । विपाश । स्कन्द । स्कम्भ । शुम्भा । शिव । शुभंया । इति कुञ्जादयः ॥

### ५१—नडादिभ्यः फक् ॥ अ० ४ । १ । ९९ ॥

नडादिप्रातिपदिकेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति । नडस्य गोत्रापत्यं नाडायनः, चारायणः ।

५४—नडादि—नड । चर । बक । मुञ्ज । इतिक । इतिश । उपक । लमक ॥ शलङ्कु शलङ्कञ्च (१) ॥ सप्तल । वाजप्य । तिक । अग्निशर्मन् वृषगणे ॥ प्राण । नर । सायक । दास । मित्र । द्वीप । पिङ्गर । पिङ्गल । किङ्कर । किङ्कल । कातर । कातल । काश्य । काश्यप । काव्य । अज । अमुष्य ॥ कृष्णरणौ ब्राह्मणवासिष्ठयोः (२) ॥ अमित्र । लिगु । चित्र । कुमार ॥ क्रोष्टु क्रोष्टञ्च (३) ॥ लोह । दुर्ग । स्तम्भ । शिंशपा । अग्र । तृण । शकट । सुमनस् । सुमत । मिमत । ऋक् । जत् । युगन्धर । हंसक । दण्डिन् । हस्तिन् । पञ्चाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । शोण । अलोह ।

(१) शलङ्कुशब्दस्य शलङ्कादेशः । शलङ्कोरपत्यं शालङ्कायनः ॥
(२) कृष्णस्यापत्यं कार्ष्णायनो ब्राह्मणः, राणायनो वासिष्ठः ॥
(३) क्रोष्टोरपत्यं क्रौष्टः ॥

दण्ड । एक । वालव्य । शावक । नाव्य । अन्वजत् । अन्तजन । इत्वरा । अंशक । अश्वला । अध्वर । दण्डप । इति नडादयः ॥

५२—अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥अ०४।१।१०४॥

विदादिप्रातिपदिकेभ्यो गोत्रापत्येऽञ् प्रत्ययो भवति । येऽत्र गणेऽनृषिवाचकास्तेभ्यस्त्वनन्तरापत्य एव । विदस्य गोत्रापत्यं वैदः । पुत्रस्यानन्तरापत्यं पौत्रः, दौहित्रः ।

५५—बिदादि—बिद । उर्व । कश्यप । कुशिक । भरद्वाज । उपमन्यु । किलालप । किदर्भ । विश्वानर । ऋष्टिषेण । ऋतभाग । हर्यश्व । प्रियक । आपस्तम्ब । कूचवार । शरद्वत् । शुनक । धेनु । गोपवन । शिग्रु । बिन्दु । भाजन । अश्वावतान । श्यामाक । श्यमाक । श्यापर्ण । हरित । किन्दास । वह्यस्क । अर्कलूष । वध्योग । विष्णुवृद्ध । प्रतिबोध । रथन्तर । रथीतर । गविष्ठिर । निषाद । मठर । मृद । पुनर्भू । पुत्र । दुहितृ । ननान्दृ ॥ परस्त्री परशुं च (१) ॥ किलात । मण्डक । शालली । श्यायव । अमम । इति बिदादयः ॥

वन्तु । मनायी । भूत । कथक । कप । तण्ड । वतण्ड । कपि । कत । शरकुत । अनडुह् । कण्व । शकल । गोकक्ष । अगस्त्य । कुण्डिन । यज्ञवल्क । उभय । जात । विरोहित । वृषगण । रहूगण । शण्डिल । चण । मचुलुक । मुद्गल । मुसल । पराशर । जतूकर्ण । मन्त्रित । संहित । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूण । अररक । पिङ्गल । कृष्ण । गोलुन्द । उलूक । तितिक्ष । भिषज् । भडित । भण्डित । दल्भ । चिकित । देवहू । इन्द्रहू । एकलू । पिप्पलु । बृहदग्नि । जमदग्नि । सुलोभिन् । उक्थ । कुटीगु । इति गर्गादयः ॥

४५—अश्वादिभ्यः फञ् ॥ अ० ४ । १ । ११० ॥

अश्वादिभ्यो गोत्रापत्ये फञ् प्रत्ययो भवति । आश्वायनः, आश्मायनः । येऽस्मिन् गणेऽपत्यप्रत्ययान्ता पठ्यन्ते तेषु सामर्थ्या-च्युनि प्रत्ययो विज्ञायते ।

४७—अश्वादि—अश्व । अश्मन् । शङ्ख । विद । पुट । रोहिण । खर्जूर । खर्जूल । पिञ्जूर । भडिल । भण्डिल । भडित । भण्डित । भण्डिक । प्रहृत । रामोद । क्षत्र । ग्रीवा । काश । गोलाङ्क्य । अर्क । स्वन । ध्वन । पाद । चक्र । कुल । पवित्र । गोमिन् । श्याम । धूम । धूम्र । वाग्मिन् । विश्वानर । कुट । वेश । आत्रेय । नक्त । तड । नड । ग्रीष्म । अर्ह । विशम्प । विशाला । गिरि । चपल । चुनम । दासक । वैल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । शान्त । प्राच्य । कित । काण । चुम्प । श्रविष्ठा । वीक्ष्य । पविन्दा ॥ आत्रेय, भारद्वाजे ॥ कुत्स । आतव । कितव । शिव । खदिर ॥ भरद्वाज आत्रेये (१) ॥ पथ । कन्थु । ध्रुव । सुतु । कर्कटक । दत्त । तरुत । तलुत । प्रचुल । विलम्ब । विष्णुज । इत्यश्वादयः ॥

(१) आत्रेयशब्दाद् भारद्वाजगोत्रे फञ् । आत्रेयायणो भारद्वाजः । अ भरद्वाजशब्दादात्रेयगोत्रे फञ् । भारद्वाजायन आत्रेयः ॥

## ५५—शिवादिभ्योऽण् ॥ अ० ४ । १ । ११२ ॥

शिवादिभ्यः समान्यापत्येऽण् प्रत्ययो भवति । यथाप्राप्तानामिञादीनामणपवादानां च बाधकः । शिवस्यापत्यं शैवः ।

५८—शिवादि—शिव । प्रौष्ठ । प्रोष्ठिक । चण्ड । जम्भ । भाण्ड । मुनि । सन्धि । भूरि । कुठार । अनभिम्लान । अनभिम्लान । ककुत्स्थ । कहोड । लेख । रोध । खञ्जन । कोहड । पिष्ट । हेहय । खञ्जार । खञ्जाल । सुरोहिका । पर्ण । कहूष । परिल । वतण्ड । तृण । कर्ण । क्षीरहृद । जलहृद । परिषिक । जटिलिक । गोफिलिक । बधिरिका । मञ्जीरक । वृष्णिक । रेख । आलेखन । विश्रवण । रवण । वर्तनाक्ष । पिटक । पिटाक । तृक्षाक । नभाक । ऊर्णनाभ । जरत्कारु । उत्क्षिपा । रोहितिक । आर्यश्वेत । सुपिष्ट । खर्जूरकर्ण । मसूरकर्ण । तूणकर्ण । मयूरकर्ण । खडरक । तक्षन् । ऋष्टिषेण । गङ्गा । विपाश । यस्क । लह्य । द्रुघ । अयःस्थूण । भलन्दन । विरूपाक्ष । भूमि । इला । सपत्नी ॥ द्व्यचो नद्याः ॥ त्रिवेणी, त्रिवण च ( १ ) ॥ कहय । कपोध । परल । ग्रीवाक्ष । गोभिलिक । राजल । वडाक । बडाक । इति शिवादयः ॥

## ५६—शुभ्रादिभ्यश्च ॥ अ० ४ । १ । १२३ ॥

शुभ्रादिप्रातिपदिकेभ्योऽपत्ये ढक् प्रत्ययो भवति । यथाप्राप्तमिञादीनामपवादः । शुभ्रस्यापत्यं शौभ्रेयः ।

५९—शुभ्रादि—शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शलाचल । शलाकाभ्रू । लेखाभ्रू । विमातृ । विधवा । कृकसा । रोहिणी । रुक्मिणी । दिशा । शाल्लूक । अज-

( १ ) स्त्रीवाचकाद् "द्व्यचः" ( स्त्रै० २०१ ) इति सूत्रेण ढक् प्राप्त स नदीवाचकान्माभूत् । रेवाया अपत्यं रैवः । त्रिवेण्याश्चित्रणादेशो विशेषः । त्रिवेण्या अपत्यं त्रैवण. ॥

वसि । शकन्धि । लक्षणश्यामयोर्वसिष्ठे ( १ )॥ गोधा । कृकलास । अणीव । प्रवाहण । भरत । भारत । भागम । मृकण्डु । मघष्टु । मकष्टु । कर्पूर । इतर । अन्यतर । आलीढ । सुदत्त । सुचक्षस । सुनामन् । कद्रु । तुद । अकशाप । कुमारिका । किशोरिका । कुवेणिका । जिह्माशिन । परिधि । वायुदत्त । ककल । खट्वर । अम्बिका । अशोका । शुद्धपिङ्गला । खडान्मत्ता । अनुदृष्टि । जरतिन् । बलिवर्दिन् । विमज । बीज । श्वन् । अश्मन् । अश्व । अजिर । स्थूल । सुकण्डु । मकष्टु । यमष्टु । कष्टु । सुकण्ड । मृकण्ड । तुद । रुद । कुशेरिका । शकल । शबल । दम । अजिन । इति शुभ्रादय ॥

५७—कल्याण्यादीनामिनङ् ॥ अ० ४ । १ । १२६ ॥

कल्याण्यादिप्रातिपदिकेभ्योऽपत्ये ढक् प्रत्ययो भवति तस्मिन् सति इनङादेश. । कल्याण्या अपत्यं काल्याणिनेय, सौभागिनेय ( २ )॥

६०—कल्याण्यादि—कल्याणी । सुभगा । दुर्भगा । बन्धकी । अनुदृष्टि । अनुसृष्टि । जरती । बलीवर्दी । ज्येष्ठा । कनिष्ठा मध्यमा । परस्त्री । इति कल्याण्यादय ॥

५८—गृष्ट्यादिभ्यश्च ॥ अ० ४ । १ । १३६ ॥

गृष्ट्यादिप्रातिपदिकेभ्योऽपत्ये ढञ् प्रत्ययो भवति । अणादीनामपवाद । गृष्टेरपत्यं गार्ष्टेय ॥

---

( १ ) लक्षणस्यापत्यं लाक्षणयो वसिष्ठ । श्यामाया अपत्यं श्यामेयो वसिष्ठः । मातृपीवाचकात् श्यामाशब्दादण् प्राप्त सोऽनेन बाध्यते ॥

( २ ) कल्याण्यादिभ्यो ढक् तु सिद्धः, आदेशार्थं वचनम् 'इनङ्सिद्धमस्ते' ( पै० २०० ) इत्युभयपदवृद्धिः ॥

६१—गृष्ट्यादि—गृष्टि। हृष्टि। हलि। बलि। विश्रि। कुद्रि। अजबस्ति। मित्रयु। फलि। अलि। दृष्टि। इति गृष्ट्यादयः॥

५९—रेवत्यादिभ्यष्ठक्॥ अ० ४। १। १४६॥

रेवत्यादिभ्योऽपत्ये ठक् प्रत्ययो भवति। ठगादीनामपवादः। रेवत्या अपत्यं रैवतिकः॥

६२—रेवत्यादि—रेवती। अश्वपाली। मणिपाली। द्वारपाली। वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष। वृकबन्धु। चामरग्राह। ककुदाक्ष। इति रेवत्यादयः॥

६०—कुर्वादिभ्यो ण्यः॥ अ० ४। १। १५१॥

कुर्वादिप्रातिपदिकेभ्योऽपत्ये ण्य प्रत्ययो भवति। कुरोरपत्यं कौरव्यः, काव्यः ×।

६३—कुर्वादि—कुरु। गर्ग। मङ्गुष। अजमारक। रथकार। वावदूक। सम्राज क्षत्रिये (१)। कवि। मति। वाक्। पितृमत्। इन्द्रजालि। दामोष्णीषि। गणकारि। कैशोरि। कापिञ्जलादि। कुट। शलाका। मुर। एरक। अभ्र। दर्भ। केशिनी। वेनाच्छन्दसि॥ शूर्पणाय। श्यावनाय। श्यावरथ। श्यावपुत्र। सत्यकार। वडभीकार। शङ्कु। शाक। पथिकारिन्। मूढ। शकन्धु। कर्तृ। हर्तृ। शाकिन्। इनपिण्डी। विस्फोटक। काक। स्फाटक। शाकिन्। पातकि। धेनुजि। शुद्धिकार॥ वामरथस्य कण्वादिवत् स्वरवर्जम् (२)॥ इति कुर्वादयः॥

---

(१) सम्राट् शब्दात् क्षत्रिये वाच्ये ण्यो भवति, सम्राजोऽपत्यं साम्राज्यः क्षत्रियः॥ × कविशब्दोऽत्र पठते, तस्मात्। यु० मी०

(२) वामरथशब्दाण्ण्यप्रत्ययो भवति कण्वादिवच्च स्वरवर्जं कार्यमतिदिश्यते। कण्वादयो गर्गाद्यन्तर्गतास्तेभ्यः शैषिकोऽण् यथा काण्वछात्राः काण्वाः एव वामरथादपि शैषिकोऽण् वामरथस्य छात्रा

६१–तिकादिभ्यः फिञ् ॥ अ० ४ । १ । १५४ ॥

तिकादिप्रातिपदिकेभ्योऽपत्ये फिञ् प्रत्ययो भवति । तिकस्यापत्यं तैकायनिः, कैतवायनि. ॥

६४—तिकादि—तिक । कितव । संज्ञा । बाल । शिखा । उरस् । शाट्य । सैन्धव । यमुन्द । रूप्य । ग्राम्य । नील । अमित्र । गौकक्ष्य । कुरु । देवरथ । तैतिल । औरस । कौरव्य । भौरिकि । भौलिकि । चौपयत । चैटयत । शैकयत । क्षैतयत । ध्वाजवत । चन्द्रमस् । शुभ । गङ्गा । वरेण्य । सुयामन् । आरद्ध । वह्यका । खल्य । वृष (१) । लोमक । उदन्य । यज्ञ । अरण्य । भीत । जाजल । रस । लावक । ध्वजवद् । वसु । बन्धु । आपन्यका । सुयामन् । इति तिकादय. ॥

६२–वाकिनादीनां कुक् च ॥ अ० ४ । १ । १५८ ॥

वाकिनादिशब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति । तत्सन्नियोगेन चैषां कुगागमः । वाकिनस्यापत्यं वाकिनकायनिः ॥

६५—वाकिनादि—वाकिन । गारेध । कार्कट्य । काक । लङ्का ॥ चर्मिवर्मिणोर्नलोपश्च (२) ॥ इति वाकिनादयः ॥

६३–वा०–कम्बोजादिभ्यो लुग्वचनम् ॥ अ० ४ । १ । १७५ ॥

वामरथाः । बहुवचने यस्कादिभ्यः इति लुक् । वामरथा । 'यमक' (पै० ३०) इति टोप् वामरथी, व्याख्यानोदाय एव ॥

(१) फिञ् प्रत्ययप्रकरणे बृहदारण्य पद्यरान्तं महाभाष्ये ● इष्टम् । बृहदारण्यं वार्षायणिः ।

(२) चार्मिकायणि, वार्मिकायणिः ॥

● फिञ् प्रकरणे वृषलोपश्च ... कुट् च (पै० २१०) इति वार्तिकं तदिदं भाष्यं चात्र द्रष्टव्यम् ।

कम्बोजादिशब्देभ्योऽपत्ये तद्राजस्य विहितस्य लुग्भवति । कम्बोजस्यापत्य तद्राजो वा कम्बाज ।

६६—कम्बोजादि—कम्बोज । चोल । केरल । शक । यवन । इति कम्बोजादयः ॥

६४—न प्राच्यभर्गादियौधेयादिभ्यः ॥अ०४।१।१७८॥

प्राच्यक्षत्रियवाचकेभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य तद्राजप्रत्ययस्य लुङ् न भवति । "अतश्च" इति प्राप्त प्रतिषिध्यते । प्राच्य—पञ्चालाना राज्ञी पाञ्चाली, वैदेही; भार्गी; यौधेयी ।

६७—भर्गादि—भर्ग । करूष । केकय । कश्मीर । साल्व । थाल । उरस ( उरस ) । कौरव्य । इति भर्गादय. ।

६८—यौधेयादि—यौधेय । शौभ्रेय । शौक्रेय । ज्यावाणेय । वार्तेय । धार्तेय । त्रिगर्त । भरत । उशीनर । इति यौधेयादय ॥

६५—भिक्षादिभ्योऽण् ॥ अ० ४ । २ । ३८ ॥

षष्ठीसमर्थभिक्षादिशब्देभ्य. समूहार्थेऽण् प्रत्ययो भवति । अचादिबाधनार्थमण्ग्रहणम् । भिक्षाणा समूहो भैक्षम्, गार्भिणम् ।

६६—भिक्षादि—भिक्षा । गर्भिणी । क्षेत्र । करीष । अङ्गार । चर्मिन् । धर्मिन् । चमन् । धर्मन् । सहस्र । युवति । पदाति । पद्धति । अथर्वन् । अर्वन् । दक्षिणा । भूत । विषय । श्रोत्र ॥ वृक्षादिभ्यखण्ड ( १ ) ॥ वृक्षखण्ड । वृक्ष । तरु । पादप । इति भिक्षादय ॥

६६—खण्डिकादिभ्यश्च ॥ अ० ४ । २ । ४५ ॥

खण्डिकादिभ्य समूहार्थेऽञ् प्रत्ययो भवति । खण्डिकाना समूह. खाण्डिकम् ।

७०—खण्डिकादि—खण्डिका । वडवा ॥ क्षुद्रकमालवात्

( १ ) खण्डशब्द पुस्तकान्तरपठित, न सर्वत्र । कचित्तु 'वृक्षादिभ्य षण्ड' इति पाठ । वृक्षषण्ड ॥

सेनासंज्ञायाम् (१) ॥ भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध । इति खण्डिकादयः ॥

६७-पाशादिभ्यो यः ॥ अ० ४ । २ । ४९ ॥

षष्ठीसमर्थेभ्यः पाशादिभ्यः समूहार्थे य प्रत्ययो भवति । पाशानां समूहः पाश्या रज्जुः, तृण्या ।

७१—पाशादि—पाश । तृण । धूम । वात । अङ्गार । पोत । बालक । पिटक । पिटाक । शकट । हल । नड । वन । पटलका । गल । इति पाशादयः ॥

६८-राजन्यादिभ्यो वुञ् ॥ अ० ४ । २ । ५३ ॥

राजन्यादिप्रातिपदिकेभ्यो विषयो देश इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति । राजन्यानां विषयो देशः राजन्यकः ।

७२—राजन्यादि—राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्वन । शैलूष । उदुम्बर । बैल्वज । आर्जुनायन । सम्प्रिय । दाक्षि । ऊर्णनाभ । आर्भीत । भमड । वैतिन । बाभ्रव (२) । इति राजन्यादयः ॥

६९-भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ अ० ४ । २ । ५४ ॥

विषयो देश इत्येतस्मिन् विषये षष्ठीसमर्थेभ्यो भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल्भक्तलौ प्रत्ययौ भवतः । अणोऽपवादः । भौरिकीणां विषयो देशः भौरिकिविधम्, ऐषुकारिभक्तम् ॥

---

(१) क्षुद्राश्च मालवाश्चेति हरिदत्तः । तत्र पूर्वेणैवाञि सिद्धे गोत्रवुञ् बाधनार्थं वचनम् । क्षुद्रकमालवानां समूहः क्षौद्रकमालवी सेना । सेनासंज्ञेति नियमार्थम् । अन्यत्र न भवति ।

(२) [illegible] विषयो देशः वैराटकः, त्रैगर्तकः इत्यादयः शब्दाः सिद्धा भवन्ति ॥

७३—भौरिक्यादि—भौरिकि । भौलिकि । वैपेय । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत । इति भौरिक्यादयः ॥

७४—ऐषुकार्यादि—ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौडायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । अलायत । औलालायत । शौण्ड । शायाण्ड । वैश्वदेव । इत्यैषुकार्यादय' ॥

७०—क्रतुकथादिसूत्रान्ताट्ठक् ॥ अ० ४ । २ । ६० ॥

तदधीते तद्वेदेत्यस्मिन् विषये क्रतुविशेषवाचिभ्य उक्थादिभ्यः सूत्रान्ताच्च प्रातिपदिकाट्ठक् प्रत्यया भवति । अणोऽपवादः । अग्निष्टोमधीते वेद वा आग्निष्टोमिकः, वाजपेयिकः, औक्थिकः, वार्त्तिकसूत्रमधीते वार्त्तिकसूत्रिक , सांग्रहसूत्रिकः ।

७५—उक्थादि—उक्थ । लोकायत । न्याय । न्यास । निमित्त । पुनरुक्त । निरुक्त । यज्ञ । चर्चा । धर्म । क्रमेतर । श्लक्ष्ण । संहिता । पद । क्रम । संघात । वृत्ति । संग्रह । गुणागुण । आयुर्वेद ॥ द्विपदी, ज्योतिषि (१)॥ अनुपद । अनुकल्प । अनुगुण । इत्युक्थादयः ॥

७१—क्रमादिभ्यो वुन् ॥ अ० ४ । २ । ६१ ॥

तदधीत तद्वेदेत्यर्थे क्रमादिभ्यो वुन् प्रत्ययो भवति । क्रममधीते क्रमक', पदक' ।

७६—क्रमादि—क्रम । पद । शिक्षा । मीमांसा । सामन् । इति क्रमादयः ॥

(१) द्विपदी ज्योतिःशास्त्रमधीते जानाति वा स द्वैपदिक. ॥

७२—वसन्तादिभ्यष्ठक् ॥ अ० ४ । २ । ६३ ॥

तदधीते तद्वेदेत्यस्मिन् विषये वसन्तादिप्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति । वसन्तसहचरितो ग्रन्थो वसन्तस्तमधीते वेद वा स वासन्तिकः, वार्षिकः । एवं सर्वत्र ।

७७—वसन्तादि—वसन्त । वर्षा । शरद् । हेमन्त । शिशिर । प्रथम । गुण । चरम । अनुगुण । अपर्वन् । अथर्वन् । इति वसन्तादयः ॥

७३—संकलादिभ्यश्च ॥ अ० ४ । २ । ७५ ॥

संकलादिप्रातिपदिकेभ्यश्चातुरर्थिकोऽञ् प्रत्ययो भवति । अणोऽपवादः । पुष्कला अस्मिन् सन्तीति पौष्कलो देशः, सिकताया अदूरभवो ग्रामः सैकतः । यथासम्भवमर्थसम्बन्धः ।

७८—संकलादि—संकल । पुष्कल । उद्वप । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुदत्त । सुभूत । सुनेत्र । सुपिङ्गल । सिकता । पूतीकी । पूलास । कूलास । पलाश । निवेश । गवेष । गम्भीर । इतर । शर्मन् । अहन् । लोमन् । वेमन् । वरुण । बहुल । सद्योज । अभिषिक्त । गोभृत् । राजभृत् । गृह । भृत । भल्ल । माल । ( वृत् ) इति संकलादयः ॥

७४—सुवास्त्वादिभ्योऽण् ॥ अ० ४ । २ । ७७ ॥

सुवास्त्वादिप्रातिपदिकेभ्यश्चातुरर्थिकोऽण् प्रत्ययो भवति । अञोऽपवादः । सुवास्तोरदूरं नगरं [ सौवास्तवम्, वार्णवम् । अणुग्रहणं ङ्यां मतुपो बाधनार्थम् ] सौवास्तवी नदी ।

७९—सुवास्त्वादि—सुवास्तु । वर्णु । भण्डु । खण्डु । कण्डु । सेवालिन् । कर्पूरिन् । शिखण्डिन् । गर्त । कर्कश । शटीकर्ण । कृष्ण । कर्क । कर्कन्धूमती । गोह । गाहि । अहिसक्थ । ( वृत् ) इति सुवास्त्वादयः ॥

७५—वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्य ॥अ० ४ २।८०॥

अरीहणादिसप्तदशगणस्थप्रातिपदिकेभ्यश्चातुरर्थिका वुञादय सप्तदशैव प्रत्यया याथासंख्येन भवन्ति । आदिशब्द प्रत्येकमभिसम्बध्यते । यथासम्भवमर्थसम्बन्ध ।

अरीहणादिभ्यो वुञ् । अरीहणानां निवासो देश आरीहणक, शिरीषाणामदूरभवो ग्राम शैरीषिक ।

८०—अरीहणादि—अरीहण । द्रुघण । खदिर । सार । भगल । उलन्द । साम्परायण । क्रौष्ट्रायण । भास्त्रायण । त्रैगर्तायन । रायस्पोष । विपथ । उद्दण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । वैमतायन । मैमतायण । सौसायन । शाण्डिल्यायन । शिरीष । बधिर । त्रैगतायण । गोमतायण । सौमतायण । खाण्डायण । विपाश । सुयज्ञ । जम्बू । सुशर्म । इत्यरीहणादय ॥

कृशाश्वादिभ्यश्छण् ॥ कार्शाश्वीय, अरिष्टेन निर्वृत्तमारिष्टीयम् ।

८१—कृशाश्वादि कृशाश्व । अरिष्ट । अराश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्बर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता । बनिता । अवनत । कुविद्यास । अरस् । अवयास । अयावस । मौद्गल्य । इति कृशाश्वादय ॥

ऋश्यादिभ्य क ॥ न्यग्रोधानामदूरभवं वन न्यग्रोधकम् ।

८२—ऋश्यादि—ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण । खण्ड । परिवृत्त । कर्दम । अंशु । इति ऋश्यादय ॥

कुमुदादिभ्यष्ठच ॥ बल्वजाः सन्त्यस्मिन् स बल्वजिको देशः।

८३—कुमुदादि—कुमुद। शर्करा। न्यग्रोध। उत्कट। इत्कट। गर्त। बीज। अश्वत्थ। बल्वज। परिवाप। शिरीष। यवाष। कूप। विकङ्कत। कण्टक। कङ्कट। संकट। पलाश। त्रिक। कत। दशग्राम। इति कुमुदादयः॥

काशादिभ्य इलः। काशाः सन्ति यत्र स काशिलो देशः।

८४—काशादि—काश। वाश। अश्वत्थ। पलाश। पीयूष। विश। विस। तृण। नर। चरण। कर्दम। कर्पूर। कण्टक। गुह। आवास। नड। वन। बधूल। बधेर। इति काशादयः॥

तृणादिभ्यः शः। तृणानि यत्र सन्ति स तृणशो देशः।

८५—तृणादि—तृण। नड। बुस। पर्ण। वर्ण। चरण। अर्ण। जन। बल। लव। वन। इति तृणादयः॥

प्रेक्षादिभ्य इनिः। प्रेक्षया निर्वृत्तः प्रेक्षी।

८६—प्रेक्षादि—प्रेक्षा। हलका। फलका। बन्धुका। ध्रुवका। क्षिपका। न्यग्रोध। इर्कुट। सुघका। संकट। कूपका। कर्कटा। सुकटा। मङ्कट। शुक। महा। इति प्रेक्षादयः॥

अश्मादिभ्यो रः। अश्मना निर्वृत्तः अश्मरः।

८७—अश्मादि—अश्मन्। यूष। रुष। मीन। दर्भ। वृन्द। गुड। खण्ड। नग। शिखा। यूथ। दष। नद। नख। काट। पाम। इत्यश्मादयः॥

सख्यादिभ्यो ढञ्॥ सख्याः सन्त्यत्र साखेयो देशः।

८८—सख्यादि—सखि। सखिदत्त। वायुदत्त। गोहित। गोहिल। भल्ल। पाल। चक्रपाल। चक्रवाल। छगल। अशोक। करवीर। सीकर। सकर। सरस। समल। चर्म। चक्रपाल। उशीर। सुरस। रोह। तमाल। कदल। सप्तल। इति सख्यादयः॥

संकाशादिभ्यो ण्यः। सांकाश्यम्। काम्पिल्यस्यादूरभवो ग्रामः—काम्पिल्यः।

८६—सकाश्यादि—सकाश । काम्पिल्य । समीर । करमर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । एग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । विरत । चिकार । विरह । नासिका । इति सकाशादय ॥

बलादिभ्यो य प्रत्यय ॥ बलेन निर्वृत्तो बल्य ।

६०—बलादि—बल । चुल । तुल । डल । डुल । कपल । वन । कुल । इति बलादय ॥

पक्षादिभ्य फक प्रत्यय । पक्षेण निर्वृत्त पाक्षायण ।

६१—पक्षादि—पक्ष । तुष । अण्ड । कम्बलिक । चित्र । अश्मन् । अतिस्वन् ॥ पथिन्, पन्थ च ( १ ) ॥ कुम्भ । सीरज । सीरक । सरक । सलक । सरम । समल । रोमन् । लोमन् । हसका । लोमक । सकण्डक । अस्तिवल । यमल । हस्त । सिहक । इति पक्षादय ॥

कर्णादिभ्य फिञ् प्रत्यय ॥ कर्णस्य निवास कार्णायनि ।

६२—कर्णादि—कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह । पाञ्चजन्य । स्फिरा । कुलिश । कुम्भी । जीवन्ती । जित्व । आण्डीवत् । अर्क । लूप । स्फिक् । ग्रावत् । इति कर्णादय ॥

सुतङ्गमादिभ्य इञ् प्रत्ययो भवति । सुतङ्गमेन निर्वृत्त सौतङ्गमि ।

६३—सुतङ्गमादि—सुतङ्गम । मुनिचित्त । विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिन् । श्वन । अर्जुन । अजिर । जीव । इति सुतङ्गमादय ॥

प्रगदिन्नादिभ्यो ञ्य प्रत्यया भवति ॥ प्रगदिना यत्र सन्ति स प्रागद्यो दश ।

६४—प्रगदिनादि—प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार । इति प्रगदिन्नादय ॥

( १ ) पथोऽदूरभव वन पान्थायनम् ॥

वराहादिभ्यः कक् प्रत्ययः ॥ वराहाः सन्ति यत्र स वाराहको देशः । पालाशकः ।

६५—वराहादि—वराह । पलाश । शिरीष । पिनद्ध । स्थूण । विदग्ध । विभग्न । बाहु । खदिर । शर्करा । विनद्ध । निबद्ध । विबद्ध । मूल । इति वराहादयः ॥

कुमुदादिभ्यष्ठच् प्रत्ययो भवति ॥ कुमुदाः सन्ति यस्मिन् देशे स कौमुदिको देशः ।

६६—कुमुदादि—कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण । कुन्द । मधुकर्ण । शुचिकर्ण । शिरीष । इति कुमुदादयः ।

७६—वरणादिभ्यश्च ॥ अ० ४ । २ । ८२ ॥

वरणादिप्रातिपदिकेभ्य उत्पन्नस्य चातुरर्थिकप्रत्ययस्य लुप् भवति । वरणानामदूरभवं नगरं वरणाः ।

६७—वरणादि—वरणाः । पूर्वा गोदौ । पूर्वेण गोदौ । अपरेण गोदौ । आलिङ्ग्यायन । पर्णी । शृङ्गी । शाल्मलय । सदाण्वी । वणिकि । वणिग्य् । जालपद । मथुरा । उज्जयिनी । गया । तक्षशिला । उरसा । आक्रन्या (१) । इति वरणादयः ॥

७७—मध्वादिभ्यश्च ॥ अ० ४ । २ । ८६ ॥

मध्वादिशब्देभ्यश्च चातुरर्थिको मतुप्प्रत्ययो भवति । मधवोऽस्मिन् सन्तीति मधुमान् ।

६८—मध्वादि—मधु । बिस । स्थाणु । सुषि । हष्टि । इक्षु । वेणु । रम्य । ऋक्ष । कर्कन्धु । शमी । किरीर । हिम । किशरा । शर्पणा । मरुत् । मरुव । दार्वाघाट । शर । इष्टका । तक्षशिला ।

(१) अत्र सूत्रस्य चकारेणाकृतिगणत्वं सूच्यते । तेन कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी, शिरीषाः, कर्मी इत्यादि

शक्ति। आसन्दी। आसुति। शलाका। आमिधी। खडा। वेटा। इति मध्वादय।

७८—उत्करादिभ्यश्छ ॥ अ० ४। २। ९० ॥

उत्करादिप्रातिपदिकेभ्यश्च तुरथिकश्छ प्रत्ययो भवति। यथा सम्भवमथसम्बन्ध। अर्काणामदूरभवा ग्राम, अर्कीय।

९९—उत्करादि—उत्कर। सफल। सकर। शफर। पिप्पल। पिप्पलीमूल। अश्मन्। अर्क। पर्ण। सुपर्ण। खलाजिन। इडा। अग्नि। तिक। कितव। आतप। अनक। पलाश। तृणव। पिचुक। अश्वत्थ। शकाक्षुद्र। भस्त्रा। विशाला। अवरोहित। गर्त। शाल। अन्य। जन्या। अजिन। मञ्च। चर्मन्। उत्क्रोश। शान्त। खदिर। शूर्पणाय। श्यावनाय। नैव। बक। नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। इत्युत्करादय ॥

७९—नडादीनां कुक् च ॥ अ० ४। २। ९१ ॥

नडादिप्रातिपदिकेभ्यश्चातुरर्थिकश्छ प्रत्ययो भवति तस्मिन् सति कुगागमश्च। यथासम्भवमथसम्बन्ध। नडा सन्ति यत्र तन्नडकीय वनम्।

१००—नडादि—नड। प्लक्ष। बिल्व। वेणु। वेत्र। वतस। तृण। इक्षु। काष्ठ। कपोत॥ क्रुञ्चाया ह्रस्वत्व च (१)॥ तक्षन्नलोपश्च॥ इति नडादय ॥

८०—कत्र्यादिभ्यो ढकञ् ॥ अ० ४। २। ९५ ॥

कत्र्यादिशब्देभ्य शेषार्थे ढकञ् प्रत्ययो भवति। कत्त्रौ भव कात्रेयक।

१०१—कत्र्यादि—कत्रि। उम्भि। पुष्कर। पुष्कल। मोदन। कुम्भी। कुण्डिन। नगर। वञ्जी। भक्ति। माहिष्मती। चर्मण्वती वर्मती। ग्राम। उख्या॥ कुल्याया यलोपश्च (२)॥ इति कत्र्यादय ॥

(१) क्रुञ्चा सन्त्यस्मिन् तत् क्रुञ्चकीय वनम्, तक्षकीयो ग्राम ॥
(२) कुल्यायां भव कौलेयक। यकारलोप ॥

८१—नद्यादिभ्यो ढक् ॥ अ० ४ । २ । ९७ ॥

नद्यादिभ्यः प्रातिपदिकेभ्यः शैषिको ढक् प्रत्ययो भवति । नद्यां भवं नादेयम् ।

१०२—नद्यादि—नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । नवकौशाम्बी । ५.शफरी ।स्थादिगी । पूर्वनगरी (१) । पावा । माया । साल्वा । दार्वा । दाल्वा । वासेनकी ॥ वडवाया वृषे ॥ इति नद्यादय. ॥

८२—प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥अ०४।२।११०॥

प्रस्थोत्तरपदात् पलद्यादिभ्य. कोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः । मद्रीप्रस्थे भवो माद्रीप्रस्थ , माहकीप्रस्थ ; पलद्यां भवः पालदः, पारिषद', कोपधात्—नैलीनकः ।

१०३—पलद्यादि—पलदी । परिषत् । यकृल्लोमन् । रोमक । कालकूट । पटच्चर । वाहीक । कलकीट । मलकीट । कमलकीट । कमलभिदा । कमलकार । बाहुकीट । नैतकी । परिखा । शूरसेन । गोमती । पटचान । यक्ल । कलनकीट । कललकीकटा । गोष्ठी । नैधिकी । नैरेती । सकृल्लोमन् । इति पलद्यादयः ॥

८३—कण्वादिभ्यो गोत्रे ॥ अ० ४ । २ । १११ ॥

गोत्रप्रत्ययान्तकण्वादिप्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति। काण्व्यस्येमे काण्वाश्छात्राः ।

१०४—कण्वादि—गर्गाद्यन्तर्गताः कण्वादयः । अत एवात्र न लिख्यन्ते ॥

---

(१) पूर्वनगर्यां भवः पौर्वनगरेयः अत्र [ यदा ] 'पू, वन, गिरि' इति पाठान्तरं तदा-पौरेयम्, वानेयम्, गैरेयमिति विमर्द रूपत्रयं सेत्स्यति ।

८४—काश्यादिभ्यष्ठञ्ञिठौ ॥ अ० ४ । २ । ११६ ॥

काश्यादिप्रातिपदिकेभ्य शैषिकौ ठञ्ञिठौ प्रत्ययौ भवत । प्रत्यययोर्नेकारविपर्ययभेदात् ङीप्रत्यये विशेष । ठञन्तात् ङीप्, ञिठान्तात् तु टाबेव भवति । काश्या भव काशिक, काशिकी, काशिका ।

१०५—काश्यादि—काशि । चेदि । वैदि । सञ्जा । सधाह । अच्युत । मोदमान । शकुलाद । हस्तिकर्षू । कुदामन् । कुनामन् । हिरण्य । करण । गोधाशन । भौरिकि । भौलिङ्गि । अरिन्दम । सर्वमित्र । दवदत्त । साधुमित्र । दासमित्र । दासग्राम । सौधावतान । युवराज । उपराज । सिन्धुमित्र । दवराज ॥ आपदादिपूर्वपदात् कालान्तात् ॥ आपत्कालिकी । आपत्कालिका । और्ध्वकालिकी । और्ध्वकालिका । तात्कालिकी । तात्कालिका । इति काश्यादय ॥

८५—धूमादिभ्यश्च ॥ अ० ४ । २ । १२७ ॥

देशवाचिभ्यो धूमादिप्रातिपदिकेभ्य शैषिका वुञ् प्रत्ययो भवति । अणोऽपवाद । धूम भवो धौमक ।

१०६—धूमादि—धूम । खण्ड । खडण्ड । शशादन । आर्जुनाद । दाण्डायनस्थली । माहकस्थली । घोषस्थली । माषस्थली । राजस्थली । राजगृह । सत्रासाह । भक्षास्थली । भद्रकूल । गर्त्तकूल । आञ्जीकूल । द्व्याहाव । त्र्याहाव । संहीय । बर्बर । वर्षगर्त्त । विदेह । आनर्त्त । माठर । पाथेय । घोष । शिष्य । मित्र । बल । आराज्ञी । धार्त्तराज्ञी । अवयात । तीर्थ ॥ कूलात्सौवीरेषु ॥ समुद्रान्नावि मनुष्ये च (१) ॥ कुक्षि । अन्तरीप । द्वीप । अरुण । उज्जयिनी । दक्षिणापथ । साकेत । मानवल्ली । वल्ली । सुराष्ट्र । इति धूमादय ।

(१) समुद्रशब्दान्नावि मनुष्ये च वाच्ये वुञ् । समुद्रे भवा सामुद्रिका नौ । सामुद्रिको मनुष्यः । अन्यत्र सामुद्रं जलम् ॥

## ८६—कच्छादिभ्यश्च ॥ अ० ४ । २ । १३३ ॥

कच्छादिदेशवाचिप्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति । वुञादेरपवादः । कच्छे भवः काच्छः ।

१०७—कच्छादि—कच्छ । सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । कुरु । रङ्कु । अणु । खण्ड । द्वीप । अनूप । अजवाह । विजापक । कुलून । इति कच्छादयः ॥

## ८७—गहादिभ्यश्च ॥ अ० ४ । २ । १३८ ॥

गहादिप्रातिपदिकेभ्यः शैषिकश्छः प्रत्ययो भवति अणोरपवादः । अन्तःस्थे भवः अन्तःस्थीयः ।

१०८—गहादि—गह । अन्तःस्थ । सम । विषम ॥ मध्यमध्यमं चाण् चरणे (१) ॥ उत्तम । अङ्ग । वङ्ग । मगध । पूर्वपक्ष । अपरपक्ष । अधमशाख । उत्तमशाख । समानशाख । एकग्राम । एकवृक्ष । एकपलाश । इष्वग्र । इष्वनीक । अवस्यन्दी । अवरकन्द । कामप्रस्थ । खाडायनि । खाण्डायनी । कावेरणि । कामवेरणि । शैशिरि । शौङ्गि । आसुरि । आहिंसि । आमित्रि । व्याडि । वैदजि । भौजि । आढ्यश्वि । आनृशंसि । सौधि । पारकि । अग्निशर्मन् । देवशर्मन् । श्रौति । आरटकि । वाल्मीकि । क्षेमवृद्धिन् । उत्तर । अन्तर ॥ मुखपार्श्वतसोर्लोपः ॥ जनपरयोः कुक् च ॥ देवस्य च ॥ वेणुकादिभ्यश्छण् (२) इति गहादयः ॥

---

(१) अस्यैव सूत्रस्य शेषवार्त्तिकप्रमाणेन पृथिवीमध्यशब्दस्य मध्यमादेशश्चरणेऽभिधेये निवासलक्षणोऽण् प्रत्ययः । अन्यत्र तु छ एव । पृथिवीमध्ये निवास एषां ते माध्यमाश्चरणाः । चरणादन्यत्र—मध्ये भवो मध्यमीयः ॥

(२) मुखपार्श्वयोस्तसन्तयोरन्त्यलोपः । मुखतो भवः मुखतीयम्, पार्श्वतीयम् । जने भवो जनकीयः, परकीयः । देवे भक्तिरस्य देवकीयः । वेणुकादिराकृतिगणः । वेणुकदेशे भवो वैणुकीयः, वैत्रकीयः, पालाशकीयः ॥

८८—सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ अ० ४ । ३ । १६ ॥

सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवाचिभ्यः प्रातिपदिकेभ्यः शैषिकोऽण् प्रत्ययो भवति । ठञोऽपवादः । अण्ग्रहणं वृद्धाच्छस्य बाधनार्थम् । सन्धिवेलायां जातः सान्धिवेलः, ग्रैष्मः, तैषः, पौषः ॥

१०९—सन्धिवेलादि—सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पञ्चदशी । पौर्णमासी । प्रतिपत् ॥ संवत्सरात् फलपर्वणोः ॥ सांवत्सरं फलम् । सांवत्सरं पर्व । इति सन्धिवेलादयः ॥

८९—दिगादिभ्यो यत् ॥ अ० ४ । ३ । ५४ ॥

सप्तमीसमर्थदिगादिप्रातिपदिकेभ्यो भवार्थे यत् प्रत्ययो भवति । अणोऽशब्दस्य चापवादः । दिशि भवं दिश्यम् ।

११०—दिगादि—दिश् । वर्ग । पूग । गण । पक्ष । धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुख । जघन (१) । मेघ । यूथ ॥ उदकात् संज्ञायाम् (२) ॥ न्याय । वंश । अनुवंश । विश । काल । अप् । आकाश । इति दिगादयः ॥

९०—वा०—ड्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ॥

अ० ४ । ३ । ५९ ॥

अव्ययीभावसंज्ञकेभ्यः परिमुखादिप्रातिपदिकेभ्यो ड्यप्रत्ययो भवति । नियमार्थं वार्त्तिकमिदम् । सूत्रेण सामान्यादव्ययीभावाद्

(१) मुखजघनशब्दाभ्यां शरीरावयवत्वादेव यति सिद्धे पुनरत्र दिगादिषु पाठोऽशरीरावयवार्थः । सेनामुखे भवं सेनामुख्यम्, सेनाजघन्यम् । सेनाया अग्रपश्चाद्भागौ गृह्येते । तदन्तविधिना यत् ॥

(२) उदके भवा उदक्या रजस्वला । संज्ञाग्रहणादिह न भवति—उदके भव औदको मत्स्यः ॥

भ्यः प्राप्तो नियम्यते । परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । नियमादिह न भवति—उपकूलं भवमौपकूलम् ।

१११—परिमुखादि—परिमुख । परिहनु । पर्योष्ठ । पर्युलू । औपमूल । स्थल । परिसीर । अनुसीर । उपसीर । उपस्थल । उपकलाप । अनुपथ । अनुखड्ग । अनुतिल । अनुशीत । अनुमाष । अनुयव । अनुयूप । अनुवंश । अनुखड्ग । इति परिमुखादयः ॥

९१—वा०—अध्यात्मादिभ्यश्च ॥ ४ । ३ । ६० ॥

अध्यात्मादिभ्यो भवार्थे ठञ् प्रत्ययो भवति । अध्यात्मं भवमाध्यात्मिकम् ।

११२—अध्यात्मादि—अध्यात्म । अधिदेव । अधिभूत । आकृतिगणोऽयम् । इत्यध्यात्मादयः ॥

९२—अण् ऋगयनादिभ्यः ॥ अ० ४ । ३ । ७३ ॥

षष्ठीसमर्थेभ्य ऋगयनादिप्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोरण् प्रत्ययो भवति । ऋगयने भवमार्गयनः, तस्य व्याख्यानो वा । अण्ग्रहणं बाधकबाधनार्थम् । वास्तुविद्याया व्याख्यानो ग्रन्थो वास्तुविद्यः । अत्र ठक्प्रत्ययो मा भूत् ।

११३—ऋगयनादि—ऋगयन । पदव्याख्यान । छन्दोमान । छन्दोभाषा । छन्दोविचिति । न्याय । पुनरुक्त । व्याकरण । निगम । वास्तुविद्या । अङ्गविद्या । क्षत्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त्त । निमित्त । उपनिषद् । शिक्षा । छन्दोविजिनी । व्याय । निरुक्त । विद्या । उद्याव । भिक्षा । इति ऋगयनादयः ॥

९३ शुण्डिकादिभ्योऽण् ॥ अ० ४ । ३ । ७६ ॥

पञ्चमीसमर्थेभ्यः शुण्डिकादिप्रातिपदिकेभ्य आगतार्थेऽण् प्रत्ययो भवति । शुण्डिकादागतः शौण्डिकः ॥

११४—शुण्डिकादि—शुण्डिक । कृकण । स्थण्डिल । उदपान । उपल । तीर्थ । भूमि । तृण । पर्ण । इति शुण्डिकादयः ॥

९४—शण्डिकादिभ्यो ञ्यः ॥ अ० ४ । ३ । ९२ ॥

प्रथमासमर्थशण्डिकादिप्रातिपदिकेभ्योऽभिजनेऽभिधेये ञ्य. प्रत्ययो भवति । शण्डिकोऽभिजनोऽस्य स शाण्डिक्यः ॥

११५—शण्डिकादि—शण्डिक । सर्वकेश । सर्वसेन । शक । शट । रक । शङ्ख । बोध । इति शण्डिकादयः ॥

९५—सिन्धुतक्षशिलादिभ्योऽणञौ ॥ अ०४।३।९३॥

प्रथमासमानाधिकरणेभ्य सिन्ध्वादिभ्यस्तक्षशिलादिभ्यश्चाभिजनेऽर्थे यथासंख्यमणञौ प्रत्ययौ भवत । सिन्धुरभिजनोऽस्य स सैन्धव । तक्षशिलाऽभिजनोऽस्य स ताक्षशिलः । प्रत्ययभेदः स्वरभेदार्थ ॥

११६—सिन्ध्वादि—सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । किष्किन्धा । गब्दिका । उरस । दरत् । कुलून । द्विरसा । इति । सिन्ध्वादय ॥

११७—तक्षशिलादि—तक्षशिला । वत्सोद्धरण । कौमेदुर । काण्डवारण । ग्रामणी । सरालक । कंस । किन्नर । संकुचित । सिंहकोष्ठ । कर्णकोष्ठ । बर्बर । अवसान । इति तक्षशिलादयः ॥

९६—शौनकादिभ्यश्छन्दसि ॥ अ० ४ । ३ । १०६ ॥

तृतीयासमर्थशौनकादिप्रातिपदिकेभ्यश्छन्दसि वेदे प्रोक्तार्थे णिनिः प्रत्ययो भवति । छाणोरपवाद । शौनकेन प्रोक्तमधीयते शौनकिनः । वाजसनेयिनः । छन्दसीति किम् । शौनकीया शिक्षा । अत्र छन्द एव भवति ।

११८—शौनकादि—शौनक । वाजसनेय । शाङ्गरव । सापेय । शाखेय । खाडायन । स्कन्द । स्कन्ध । देवदत्तशठ । रज्जुकण्ठ । रज्जुभार । कठशाठ । कशाय । तलवकार । पुरुषासक । अश्वपेय । कम्म । इति शौनकादयः ॥

९७—कुलालादिभ्यो वुञ् ॥ अ० ४ । ३ । ११८ ॥

तृतीयासमर्थेभ्यः कुलालादिप्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति। कृतमित्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम्। कुलालेन कृतं कौलालकम्, वारुडकम्।

११९—कुलालादि—कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह् । ब्रह्मन् । कुम्भकार । श्वपाक । इति कुलालादयः॥

९८—रैवतिकादिभ्यश्छः ॥ ४ । ३ । १३१ ॥

रैवतिकादिभ्यश्छः प्रत्ययो भवति, तस्येदमित्येतस्मिन् विषये। रैवतिकीयः, स्वापिशीयः।

१२०—रैवतिकादि—रैवतिक । स्वापिशि । क्षैमवृद्धि । गौरग्रीवि । औदमेघि । औदवापि । बैजवापि ॥ इति रैवतिकादयः ॥

९९—बिल्वादिभ्योऽण् ॥ अ० ४ । ३ । १३६ ॥

षष्ठीसमर्थेभ्यो बिल्वादिप्रातिपदिकेभ्यो विकारावयवयोरर्थयोरण् प्रत्ययो भवति। बिल्वस्य विकारोऽवयवो वा बैल्वः।

१२१—बिल्वादि—बिल्व । व्रीहि । काण्ड । मुद्ग । मसूर । गोधूम । इक्षु । वेणु । गवेधुका (१) । कर्पासी । पाटली । कर्कन्धू । कुटीर । इति बिल्वादयः ॥

१००—पलाशादिभ्यो वा ॥ अ० ४ । ३ । १४१ ॥

पलाशादिप्रातिपदिकेभ्यो विकारावयवयोरञ् प्रत्ययो भवति। पलाशस्य विकारः पालाशम्, खादिरम्।

१२२—पलाशादि—पलाश । खदिर । शिंशपा । स्यन्दन । करीर । शिरीष । यवास । विकङ्कत । इति पलाशादयः ॥

(१) अस्मात् 'कोपधाच्च' (अष्टा० ४ । ३ । १३७) इत्यणि सिद्धे पुनः पाठो मयड्बाधनार्थः । एतस्मात् परोऽपि मयण्मा भूदिति ॥

१०१–नित्यं वृद्धशरादिभ्यः ॥ अ० ४ । ३ । १४४॥

वृद्धेभ्यः शरादिभ्यश्च प्रातिपदिकेभ्यो भक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति । वृद्ध–आम्रमयम्, शालमयम् । शरमयम्, दर्भमयम् ।

१२३—शरादि—शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज । इति शरादयः ॥

१०२–तालादिभ्योऽण् ॥ अ० ४ । ३ । १५२ ॥

तालादिप्रातिपदिकेभ्यो विकारावयवयोरण् प्रत्ययो भवति । तालस्य विकारः तालं धनुः । अन्यत्र तालमयम् । वृद्धत्वान्मयट् ।

१२४—तालादि—तालाद्धनुषि ॥ बार्हिण ॥ इन्द्रालिश । इन्द्रादृश । इन्द्रायुध । चाप । चय । श्यामाक । पायुक्षा । इति तालादयः ॥

१०३–प्राणिरजतादिभ्योऽण् ॥ अ० ४ । ३ । १५४ ॥

प्राणिवाचिभ्यो रजतादिभ्यश्च प्रातिपदिकेभ्यो विकारावयवयोरञ् प्रत्ययो भवति । कपोतस्य विकारः कापोतम्, राजतम् ।

१२५—रजतादि—रजत । सीस । लोह । उदुम्बर । नीच । नील । दारु । रोहितक । बिभीतक । कपीत । दारु । तीव्रदारु । त्रिकण्टक । कण्टकार । इति रजतादयः ॥

१०४ प्लक्षादिभ्योऽण् ॥ अ० ४ । ३ । १६४ ॥

प्लक्षादिप्रातिपदिकेभ्यो विकारावयवत्वेन विवक्षिते फलेऽभिधेयेऽण् प्रत्ययो भवति । प्लक्षस्य विकारः प्लाक्षम्, नैयग्रोधम् ।

१२६—प्लक्षादि—प्लक्ष । न्यग्रोध । अश्वत्थ । इङ्गुदी । शिग्रु । कर्कन्धु । कर्कन्तु । ऋकतु । बृहती । काच । तुरुक । इति प्लक्षादयः ॥

१०५–हरीतक्यादिभ्यश्च ॥ अ० ४ । ३ । १६७ ॥

हरीतक्यादिप्रातिपदिकेभ्यः फलेऽभिधेये प्रत्ययस्य लुप् भवति ।

लुकि प्राप्ते लुपो विधानं युक्तवद्भावार्थम् । हरीतक्याः फलं हरीतकी, हरीतक्याः फलानि हरीतक्यः (१) ।

१२७—हरीतक्यादि—हरीतकी । कोशातकी । नखरजनी । नगररजनी । शष्कण्डी । शाकण्डी । दाडी । दोडी । दडी । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । कण्टकारिका । शेफालिका । इति हरीतक्यादयः ।

१०६—पर्पादिभ्यः ष्ठन् ॥ अ० ४ । ४ । १० ॥

पर्पादिभ्यश्चरतीत्यर्थे ष्ठन् प्रत्ययो भवति । षकारो ङीषर्थः । पर्पेण चरति पर्पिकः, पर्पिकी ।

१२८—पर्पादि—पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल ॥ पादः पच्च ॥ पदिकः । इति पर्पादयः ॥

१०७—वेतनादिभ्यो जीवति ॥ अ० ४ । ४ । १२ ॥

तृतीयासमर्थवेतनादिप्रातिपदिकेभ्यो जीवतीत्यर्थे ठक् प्रत्ययो भवति । वेतनेन जीवति वैतनिकः ।

१२९—वेतनादि—वेतन । वाह । अर्द्धवाह । धनुर्दण्ड (२) । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेष । स्रज् । पाद । उपस्थान । इति वेतनादयः ।

१०८—हरत्युत्सङ्गादिभ्यः ॥ अ० ४ । ४ । १५ ॥

तृतीयासमर्थोत्सङ्गादिप्रातिपदिकेभ्यो हरतीत्यर्थे ठक् प्रत्ययो भवति । उत्सङ्गेन हरति, औत्सङ्गिकः ।

(१) "हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेन" (महा० १।२।५१) इति वार्त्तिकेन लिङ्गस्यैव युक्तवद्भावो न तु वचनस्य ।

(२) अत्र संघातविगृहीतयोर्ग्रहणं भवति । धनुर्दण्डेन धानुर्दण्डिकः । धनुषा जीवति धानुष्कः, दाण्डिकः ।

१३०—उत्सङ्गादि—उत्सङ्ग । उडुप । उत्पत । पिटक । उडप । पिटाक । इत्युत्सङ्गादय ॥

१०९—भस्त्रादिभ्य ष्ठन् ॥ अ० ४ । ४ । १६ ॥

भस्त्रादितृतीयासमर्थप्रातिपदिकेभ्यो हरतीत्यर्थे ष्ठन् प्रत्ययो भवति। भस्त्रया हरति भस्त्रिक , भास्त्रकी ।

१३१—भस्त्रादि—भस्त्रा । भरट । भरण । भारण । शीर्षभार । शीर्षेभार । असभार । असेभार । इति भस्त्रादय ॥

११०—निर्वृत्तेऽक्षद्यूतादिभ्य. ॥ अ० ४ । ४ । १९ ॥

अक्षद्यूतादितृतीयासमर्थप्रातिपदिकेभ्यो निर्वृत्तेऽर्थे ठक् प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिक वैरम् ।

१३२—अक्षद्यूतादि—अक्षद्यूत । जानुप्रहृत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । अनुगत । इत्यक्षद्यूतादय ॥

१११—अण् महिष्यादिभ्य. ॥ अ० ४ । ४ । ४८ ॥

षष्ठीसमर्थमहिष्यादिप्रातिपदिकेभ्यो धर्म्यमित्यर्थेऽण् प्रत्ययो भवति । महिष्या धर्म्यं माहिषम्

१३३—महिष्यादि—महिषी । प्रजावती । प्रलेपिका । विलेपिका । अनुलेपिका । पुरोहित । मणिपाली । अनुचारक । होतृ । यजमान । इति महिष्यादय ॥

११२—किशरादिभ्य ष्ठन् ॥ अ० ४ । ४ । ५३ ॥

प्रथमासमानाधिकरणकिशरादिप्रातिपदिकेभ्य पण्यमित्यर्थे ष्ठन् प्रत्ययो भवति । गन्धविशेषवाचका किशरादय । किशरा पण्यमस्य किशरिक । किशरिकी ।

१३४—किशरादि—किशर । नरद । नलद । सुमङ्गन । तगर । गुग्गुल । उशीर । हरिद्रा । हरिद्रायणी । इति किशरादय ॥

११३—छत्रादिभ्यो णः ॥ अ० ४ । ४ । ६२ ॥

११७–उगवादिभ्यो यत् ॥ अ० ५ । १ । २ ॥

उवर्णान्ताद् गवादिभ्यश्च प्रातिपदिकेभ्य प्राक्क्रीतीयेष्वर्थेषु यत् प्रत्ययो भवति । शङ्कवे हित शङ्कव्य दारु, गवे हित गव्यम् ।

१३६—गवादि—गो । हविस् । बर्हिस् । खट । अष्टका । युग । मेधा । स्रुक् ॥ नाभि नभ च ॥ शुन सम्प्रसारण वा च दीर्घत्व तत्संनियोगेन चान्तोदात्तत्वम् ( १ ) ॥ शुन्यम् । शून्यम् ॥ ऊधसोऽनङ् च ॥ ऊधन्य । कूप । उदर । खर । खद । असुर । विष । स्कन्द । अध्वा । इति गवादय ॥

११८–विभाषा हविरपूपादिभ्य ॥ अ० ५ । १ । ४ ॥

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्य प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति, पक्षे [redacted] । पुरोडाशाय हिता पुरोडाश्या, पुरोडाशीया वा तण्डुला, अपूपेभ्यो हितम् अपूप्यम् । अपूपीयम् ।

१४०—अपूपादि—अपूप । तण्डुल । अभ्यूष । अभ्योष । पृथुक । अभ्येष । अर्गल । मुसल । सूप । कटक । वर्णवेष्टक । किण्व ॥ अन्नविकारेभ्यश्च ( २ ) ॥ यूप । स्थूणा । पीप । अश्व । पत्र । कट । अय स्थूणा । ओदन । अवोष । प्रदीप । इत्यपूपादय ॥

११६–असमासे निष्कादिभ्य ॥ अ० ५ । १ । २० ॥

असमस्तेभ्यो निष्कादिप्रातिपदिकेभ्य आर्हीयेष्वर्थेषु ठक् प्रत्ययो

( १ ) नाभये हितो नभ्योऽक्ष , नभ्यमञ्जनम् । यस्तु शरीरावयववाची नाभिशब्दस्तत शरीरावयवादिति यति कृते नाभये हित नाभ्य तैलमिति भवति । चकारस्यानुक्तसमुच्चयार्थत्वात् 'नस्तद्धित' ( खे० ८६७ ) इति लोपो न भवति ॥

( २ ) अन्नविकारवाचिभ्यो यत् प्रत्ययो भवति । शष्कुलीभ्यो हित शष्कुल्यम् , सूप्यम् , ओदन्यम् ॥

भवति। निष्कं परिमाणमस्य तन्नैष्किकम्। असमासे किम्—परमनैष्किकम्। अत्र ठञ्स्वरे भेदः।

१४१—निष्कादि—निष्क। पण। पाद। माष। वाह्द्रोण। षष्टि। इति निष्कादयः॥

## १२०—गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत् ॥अ० ५। १। ३९॥

संख्यापरिमाणाश्वादिविवर्जिताद् गोशब्दाद् द्व्यचश्च प्रातिपदिकात् प्रत्ययो भवति तस्य निमित्तं संयोगोत्पातावित्यर्थः। गोनिमित्तं संयोग उत्पातो वा गव्यः। द्व्यच्-धनस्य निमित्तं संयोग उत्पातो वा धन्यम्, स्वर्ग्यम्, यशस्यम्, आयुष्यम्। संख्या-पञ्चानां निमित्तं पञ्चकम्। परिमाण-प्रास्थिकम्। अश्वादि-आश्विकम्। सर्वत्र यत् न भवति।

१४२—अश्वादि—अश्व। अश्मन्। गण। ऊर्णा। उमा। वसु। वर्ष। भङ्ग। इत्यश्वादयः॥

## १२१—तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥अ० ५। १। ५०॥

द्वितीयासमर्थाद् वंशादिभ्यः परस्माद् भारशब्दाद्धरत्यादिषु यथाविहितं प्रत्ययो भवति। वंशभारं हरति वहत्यावहति वा वांशभारिकः, कौटजभारिकः। भारादिति किम्—वंशं हरति। वंशादिभ्य इति किम्—व्रीहिभारं हरति, अत्र मा भूत्।

१४३—वंशादि—वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। इति वंशादयः॥

## १२२—छेदादिभ्यो नित्यम् ॥ अ० ५। १। ६४॥

द्वितीयासमर्थछेदादिप्रातिपदिकेभ्यो नित्यमर्हतीत्यर्थे यथाविहितं प्रत्ययो भवति। छेदनं नित्यमर्हति छैदिकः।

१४४—छेदादि—छेद । भेद । द्रोह । दोह । वर्त । कर्ष । सम्प्रयोग । विप्रयोग । प्रेषण । सम्प्रश्न । विप्रकर्ष ॥ विराग विरङ्ग च ॥ वैरङ्ग्य । इति छेदादय ॥

१२३–दण्डादिभ्यो य ॥ अ० ५ । १ । ६६ ॥

द्वितीयासमर्थदण्डादिप्रातिपदिकेभ्योऽर्हतीत्यर्थे य प्रत्ययो भवति । दण्डमर्हति दण्ड्य ।

१४५—दण्डादि—दण्ड । मुसल । मधुपर्क । कशा । अर्घ । मेधा । मेघ । युग । उदक । वध । गुहा । भाग । इभ । इति दण्डादय ॥

१२४–व्युष्टादिभ्योऽण् ॥ अ० ५ । १ । ९७ ॥

सप्तमीसमर्थव्युष्टादिप्रातिपदिकेभ्यो दीयते कार्यमित्येतयोरर्थयोरण् प्रत्ययो भवति । व्युष्टे दीयते कार्य वा वैयुष्टम् ।

१४६—व्युष्टादि—व्युष्ट । नित्य । निष्क्रमण । प्रवेशन । तीर्थ । सम्भ्रम । आस्तरण । संग्राम । संघात । अग्निपद । पीलुमूल । प्रवास । उपसंक्रमण । दार्घ । उपवास । इति व्युष्टादय ॥

१२५–तस्मै प्रभवति संतापादिभ्यः ॥अ०५।१।१०१॥

चतुर्थीसमर्थसन्तापादिप्रातिपदिकेभ्य प्रभवतीत्यर्थे ठञ् प्रत्ययो भवति सन्तापाय प्रभवति सान्तापिक ।

१४७—सन्तापादि—सन्ताप । संनाह । संग्राम । संयोग । संपराय । संपेष । निष्पेष । निसर्ग । असर्ग । विसर्ग । उपसर्ग । उपवास । प्रवास । संघात । समोदन । सक्तु ॥ मांसौदनाद्विगृहीतादपि ॥ मांसौदनिक । मांसिक । औदनिक ॥ निर्घोष । सर्ग । संपात । संवाद । संवेशन । इति संतापादय ॥

१२६–अनुप्रवचनादिभ्यश्छ ॥ अ० ५ । १ । १११ ॥

प्रथमासमानाधिकरणादनुप्रवचनादिप्रातिपदिकेभ्यः प्रयोजनमित्ययं छः प्रत्ययो भवति। अनुप्रवचनं प्रयोजनमस्य अनुप्रवाचनीयम्।

१४८—अनुप्रवचनादि—अनुप्रवचन। उत्थापन। प्रवेशन। अनुप्रवेशन। उपस्थापन। संवेशन। अनुवेशन। अनुवचन। अनुवादन। अनुवासन। आरम्भण। आरोहण। प्ररोहण। अन्वारोहण। इत्यनुप्रवचनादय.।

१२७—पृथ्वादिभ्यः इमनिज्वा ॥ अ०५।१।१२२ ॥

षष्ठीसमर्थपृथ्वादिप्रातिपदिकेभ्यो भावेऽर्थे इमनिच् प्रत्ययो वा भवति। वा वचनमणादेः समवेशार्थम्। पृथोर्भावः प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता।

१४६—पृथ्वादि—पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आशु। बहुल। गुरु। दण्ड। उरु। खण्ड। चण्ड। बाल। अकिंचन। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुद्र। इति पृथ्वादयः॥

१२८—वर्णदृढादिभ्यः ष्यञ् च ॥ अ० ५।१।१२३ ॥

वर्णविशेषवाचिभ्यो दृढादिभ्यश्च प्रातिपदिकेभ्यो भावे ष्यञ् चादिमनिच् प्रत्ययो भवति। शुक्लस्य भाव शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता। दार्ढ्यम्, दृढत्वम्, दृढता।

१५०—दृढादि—दृढ। परिवृढ। भृश। कृश। चक्र। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक॥ वेर्यातलाभमतिमनःशारदानाम्॥ समो मतिमनसोर्जवने (१) वात। तरुण। मन्द। स्थिर। बहुल। दीर्घ। गूढ। आकृष्ट। इति दृढादयः॥

(१) वे परेभ्यो यातादिभ्यः ष्यञ्। वैयात्यम्, वैलाभ्यम्, वैमत्यम्, वैमनस्यम्, वैशारद्यम्। समः परास्यां मतिमनोभ्यां वेगेऽर्थे ष्यञ्। साम्मत्यम्, साम्मनस्यम्॥

१२९—गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ अ० ५ ॥
१ । १२४ ॥

गुणवचनेभ्यो ब्राह्मणादिभ्यश्च प्रातिपदिकेभ्यो भावे कर्मणि चाभिधेये ष्यञ् प्रत्ययो भवति । जडस्य भाव कर्म वा जाड्यम्, ब्राह्मणस्य भाव कर्म वा ब्राह्मण्यम् ।

१५१—ब्राह्मणादि—ब्राह्मण । वाडव । माणव । चोर । मूक । आराधय । विराधय । अपराधय । उपराधय । एकभाव । द्विभाव । त्रिभाव । अन्यभाव । समस्थ । विषमस्थ । परमस्थ । मध्यमस्थ । अनीश्वर । कुशल । कपि । चपल । क्षेत्रज्ञ । निपुण ॥ अर्हतो नुम् च ॥ आर्हन्त्यम् । संवादिन् । संवेशिन् । बहुभाषिन् । बालिश । दुष्पुरुष । कापुरुष । दायाद । विशसि । धूर्त । राजन् । सभाषिन् । शीघ्रपातिन् । अधिपात । अलस । पिशाच । पिशुन । विशाल । गणपति । धनपति । नरपति । गडुल । निर । निधान । विष ॥ सर्ववेदादिभ्य स्वार्थे ( १ ) ॥ चतुर्वेदस्योभयपदवृद्धिश्च ॥ चातुर्वैद्यम् । स्वभाव । निघातिन् । विघातिन् । राजपुरुष । विशस्ति । विशाय । विशाल । विजात । नयात । सुहित । दान । विदग्ध । उचित । समम । शली । तत्पर । इदम्पर । यथातथा । पुरस् । पुन पुनर् । अभीक्ष्ण । उरतम । प्रकाम । यथाकाम । निष्कुल । स्वराज । महाराज । युवराज । सम्राज् । अविदूर । अपिशुन । अनृशंस । अयथातथ । अयथापुर । स्वधर्म । अनुकूल । परिमाण्डल । विश्वरूप । ऋत्विज । उदासीन । ईश्वर । प्रतिभू । साक्षि । मानुष । आस्तिक । नास्तिक । युगपत् । पूर्वापर । उत्तराधर । इति ब्राह्मणादय ॥

( १ ) सर्वे एव वेदा सार्ववैद्यम्, सार्वलौक्यम्, सार्वराज्यम्, सार्वगुण्यम् । आकृतिगणोऽयम् ॥

१५४—उद्गात्रादि—उद्गातृ । उन्नेतृ । प्रतिहर्तृ । रथगणक । पत्तिगणक । पत्रिगणक । सुष्ठु । दुष्ठु । अध्वर्यु । वधू ॥ सुभग मन्त्रे (१) ॥ प्रशास्तृ । होतृ । पोतृ । कर्तृ । इत्युद्गात्रादयः ॥

१३३—हायनान्तयुवादिभ्योऽण् ॥ अ०५।१।१३० ॥

हायनान्तेभ्यो युवादिभ्यश्च षष्ठीसमर्थप्रातिपदिकेभ्यो भावकर्मणोरर्थयोरण् प्रत्ययो भवति । द्विहायनस्य भावः कर्म वा द्वैहायनम्, यूनो भावः कर्म वा यौवनम् ।

१५५—युवादि—युवन् । स्थविर । होतृ । यजमान । कमण्डलु ॥ पुरुषाऽसे (२) ॥ सुहृत् । यार । श्रवण । कुस्त्री । सुस्त्री । सुहृदय । सुभ्रातृ । वृषल । दुर्भ्रातृ ॥ हृदयाऽसे (३) ॥ क्षेत्रज्ञ । कुतक । परिव्राजक । कुशल । चपल । निपुण । पिशुन । ब्रह्मचारिन् । कुतूहल । अनृशंस । भ्रातृ । कथुक । कन्दुक । दुःस्त्री । दुर्हृदय । दुर्हृत् । मिथुन । कुलटा । महत् । कतक । कितव । पोत । इति युवादयः ॥

१३४—द्वन्द्वमनोज्ञादिभ्यश्च ॥ अ० ५ । १ । १३३ ॥

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च षष्ठीसमर्थप्रातिपदिकेभ्यो भावकर्मणोरर्थयोर्वुन् प्रत्ययो भवति । गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका, शैष्योपाध्यायिका, मनोज्ञस्य भावः कर्म वा मानोज्ञकम् ।

१५६—मनोज्ञादि—मनोज्ञ । कल्याण । प्रियरूप । छान्दस । छात्र । मेधाविन् । अभिरूप । आढ्य । कुलपुत्र । श्रोत्रिय । चोर । धूर्त । वैश्वदेव । युवन् । ग्रामपुत्र । ग्रामखण्ड । ग्रामकुमार । अमुष्य-

(१) सुभगस्य भावः सौभगो मन्त्रः ॥

(२) पुरुषस्य भावः कर्म पौरुषम् । सुपुरुषत्वमिति समासे ॥

(३) हार्दम् । (द० ६।३।५०) समासे ॥ परमहृदयत्वमित्येव ॥

पुत्र । अमुष्यकुल । शतपुत्र । कुशल । बहुल । अवश्य । अहोपुरुष । इति मनोज्ञादयः ।

१३५–तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ अ० ५ । २ । २४ ॥

पील्वादिभ्यः कर्णादिभ्यश्च षष्ठीसमर्थप्रातिपदिकेभ्यो यथासंख्यं पाकमूलयोरर्थयोः कुणब्जाहचौ प्रत्ययौ भवतः । पीलूनां पाकः पीलुकुणः, कर्णस्य मूलं कर्णजाहम् ॥

१४७—पील्वादि—पीलु । कर्कन्धु । शमी । करीर । कुवल । बदर । अश्वत्थ । खदिर । इति पील्वादयः ॥

१४८—कर्णादि—कर्ण । अक्षि । नख । मुख । मल । केश । पाद । गुल्फ । भ्रूभङ्ग । दन्त । ओष्ठ । पृष्ठ । अङ्गुष्ठ । इति कर्णादयः ।

१३६–तदस्य संजातं तारकादिभ्य इतच् ॥ अ० ५ । २ । ३६ ॥

प्रथमासमर्थेभ्यस्तारकादिप्रातिपदिकेभ्योऽस्येति षष्ठ्यर्थे इतच् प्रत्ययो भवति । तारकाः संजाता अस्य तारकितं नभः । पुष्पितो वृक्षः संजातग्रहणं प्रकृतिविशेषणम् ॥

१४९—तारकादि—तारका । पुष्प । मुकुल । कण्टक । पिपासा । सुख । दुःख । ऋजीष । कुड्मल । सूचक । रोग । विचार । व्याधि । निष्क्रमण । मूत्र । पुरीष । किसलय । कुसुम । प्रचार । तन्द्रा । वेग । मुद्रा । श्रद्धा । उत्कण्ठ । भर द्रोह ॥ गर्भादप्राणिनि (१) ॥ फल । उच्चार । स्तबक । पल्लव । खण्ड । धेनुष्या । अभ्र । अङ्गारक । अङ्गार । वर्णक । पुलक । कुवलय । शैवल । गर्व । तरङ्ग । कल्लोल । पण्डा ।

(१) गर्भिताः शालयः । अप्राणिनीतिवचनात् 'गर्भिणी भार्या' इत्यत्रेतच् न भवति ॥

चन्द्र। स्तबक। मुद्रा। राग। हस्त। कर। सीमन्त। कर्दम। कलज। कलङ्क। कुतूहल। कन्दल। आन्दोल। अन्धकार। कोरक। अङ्कुर। रोमाञ्च। हर्ष। उत्कर्ष। क्षुधा। ज्वर। गौर। दोह। शास्त्र। मुकुर। तिलक। बुभुक्षा। निद्रा। तारकादिराकृतिगणः। इति तारकादयः॥

१३७—विमुक्तादिभ्योऽण्॥ अ० ५। २। ६१।

अध्यायानुवाकयोरभिधेययोर्विमुक्तादिप्रातिपदिकेभ्यो मत्वर्थेऽण् प्रत्ययो भवति। विमुक्तं वर्त्ततेऽस्मिन् स वैमुक्तोऽध्यायोऽनुवाको वा, दैवासुरः॥

१६०—विमुक्तादि—विमुक्त। देवासुर। वसुमत्। सत्वत्। उपसत्। दशार्हपयस्। हविर्धान। मित्री। सोमापूषन्। अग्नाविष्णू। वृत्रहति। इडा। रक्षोऽसुर। सदसत्। परिषादक्। वसु। मरुत्वत्। पत्नीवत्। महीयल। सत्वत् (१)॥ दशार्ह। वयस्। पतत्रि। सोम। महित्री। हेतु। अयहत्य। दशार्ण। उर्वशी। सुपर्ण। इति विमुक्तादयः।

१३८—गोपदादिभ्यो वुन्॥ अ० ५। २। ६२॥

अध्यायानुवाकयोरभिधेययोर्गोपदादिप्रातिपदिकेभ्यो मत्वर्थे वुन् प्रत्ययो भवति। गोपन्शब्दोऽस्मिन्नस्ति गोपदकोऽध्यायोऽनुवाको वा, इषेत्वकः।

१६१—गोपदादि—गोपद्। इषेत्वा। मातरिश्वन्। देवस्यत्वा। देवीरापः। कृष्णोऽस्याखरेष्ठः। दैवीधियम्। रक्षोहण। अञ्जन। प्रभूत। प्रतूर्त। दशान। कृशान। सहस्रशीर्षा। वाचस्पते। कृशाश्व। स्वाहाप्राण। प्रसुत। इति गोपदादयः॥

(१) सत्वदिति शब्दोऽस्मिन् गणे द्विवारं पठ्यते। यद्येकस्ताल-व्यादिर्भवेत्तदा तु युक्तमन्यथा प्रामादिकः पाठः। एवं 'दशार्हपयस्' अपि।

१३९—आकर्षादिभ्यः कन् ॥ अ० ५ । २ । ६४ ॥

आकर्षादिभ्यः सप्तमीसमर्थप्रातिपदिकेभ्यः कुशल इत्यर्थे कन् प्रत्ययो भवति । आकर्षे कुशल आकर्षकः ।

१६२—आकर्षादि—आकर्ष । त्सरु । पिपासा । पिचण्ड । अशनि । अश्मन् । विचय । चय । जय । आचय । अय । नय । निपाद । गद्गद । दीप । ह्रद । ह्राद । ह्लाद । शकुनि । पिशाच । पिण्ड । इत्याकर्षादयः ॥

१४०—इष्टादिभ्यश्च ॥ अ० ५ । २ । ८८ ॥

इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । इष्टमनेन इष्टी यज्ञे, पूर्ती श्राद्धे ।

१६३—इष्टादि—इष्ट । पूर्त । उपसादित । निगदित । परिवादित । निकथित । परिकथित । संकलित । निपठित । संकल्पित । अनर्चित । विकलित । संगणित । निपतित । पठित । परिकलित । संरक्षित । अर्चित । परिरक्षित । पूजित । परिगणित । उपगणित । अवकीर्ण । परित । आयुक्त । आम्नात । श्रुत । अधीत । आसेवित । अपवारित । अवकल्पित । निराकृत । उपकृत । उपाकृत । अनुयुक्त । उपनत । अनुगुणित । अनुपठित । व्याकुलित । निगृहीत । अव-धारित । अपचित । इतीष्टादयः ॥

१४१—रसादिभ्यश्च ॥ अ० ५ । २ । ९५ ॥

१४२—सिध्मादिभ्यश्च ॥ अ० ५ । २ । ९७॥

सिध्मादिप्रातिपदिकेभ्यो मत्वर्थे विकल्पेन लच् प्रत्ययो भवति। सिध्मोऽस्यास्तीति सिध्मलः, सिध्मवान् । अत्र पक्षे मतुब्विधते नत्वत इनिठनौ ।

१६५—सिध्मादि—सिध्म । गडु । मणि । नाभि । जीव । निष्पाव । पांसु । सक्तु । हनु । मांस । परशु ॥ पार्ष्णिधमन्योर्दीर्घश्च॥ पार्ष्णीलः । धमनीलः । पर्ण । उदक । प्रज्ञा । मण्ड । पार्श्व । गण्ड । ग्रन्थि ॥ वातदन्तबललाटगलानामूङ् च ॥ वातूलः । दन्तूलः । बलूलः । ललाटूलः । गलूलः ॥ जटाघटाकालाः क्षेपे ॥ जटालः । घटालः । कालालः । सक्थि । कर्ण । स्नेह । शीत । श्याम । पिङ्ग। पित्त । शुष्क । पृथु । मृदु । मञ्जु । पत्र । चटु । कपि । कण्डु । संज्ञा ॥ क्षुद्रजन्तूपतापाच्चेष्यते ॥ क्षुद्रजन्तुः, यूकालः मक्षिकालः; उपताप-विचर्चिकालः, विपादिकालः, मूर्च्छालः । इति सिध्मादयः ॥

१४३—लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥अ०५। २ । १०० ॥

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च प्रातिपदिकेभ्यो मत्वर्थे यथासंख्यं श, न, इलच् इत्येते प्रत्यया भवन्ति । लोमान्यस्य सन्तीति लोमशः, लोमवान् । पाम विद्यतेऽस्य स पामनः, पामवान् । पिच्छ-मस्यास्तीति पिच्छिलः, पिच्छवान् ।

१६६—लोमादि—लोमन् । रोमन् । वल्गु । बभ्रु । हरि । कपि । मुनि । तरु । इति लोमादयः ॥

१६७—पामादि—पामन् । वामन् । हेमन् । श्लेष्मन् । कद्रु । बलि । श्रेष्ठ । पलल । सामन् ॥ अङ्गात्कल्याणे ॥ शाकीपलालीदद्र्वां

मतुप् भवति न तु 'अत इनिठनौ' स्ववान् स्ववान् ॥

ह्रस्वत्वं च ॥ विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ लक्ष्म्या अच्च (१) ॥ इति पामादयः ॥

१६८—पिच्छादि—पिच्छ । उरस् । ध्रुवका । क्षुवका ॥ जटाघटाकालात् क्षेपे (२) ॥ वर्ण । उदक । पङ्क । प्रज्ञा । इति पिच्छादयः ॥

१४४—व्रीह्यादिभ्यश्च ॥ अ० ५ । २ । ११६ ॥

प्रथमासमानाधिकरणव्रीह्यादिप्रातिपदिकेभ्यो मत्वर्थे इनिठनौ प्रत्ययौ भवतः । व्रीहयोऽस्य सन्तीति व्रीही, व्रीहिकः, व्रीहिमान् ।

१६९—व्रीह्यादि—व्रीहि । माया । शिखा । मेखला । संज्ञा । बलाका । माला । वीणा । वडवा । अष्टका । पताका । कर्मन् । संज्ञा (३) । यवखद । कुमारी । नौ (४) ॥ शीर्षान्नञः ॥ अशीर्षी, अशीर्षिकः । इति व्रीह्यादयः ॥

१४५—तुन्दादिभ्य इलच्च ॥ अ० ५ । २ । ११७ ॥

तुन्दादिप्रातिपदिकेभ्यो मत्वर्थे इलच् चकारादिनिठनौ मतुप् च प्रत्यया भवन्ति । तुन्दोऽस्यास्तीति तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् ।

१७०—तुन्दादि—तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि ॥ स्वाङ्गाद् विवृद्धौ च (५) ॥ इति तुन्दादयः ॥

---

(१) अङ्ग शब्दात् कल्याणे नः प्रत्ययः । कल्याणकरमङ्गं शरीरमस्याः सा अङ्गना । शाकिन, पलालिन, दद्रुणः । 'विषु-अच्' इत्यवस्थायां च, प्रत्ययस्य इत्युत्तरपदलोपात् आगमस्य लोपः । विष्वगस्यास्तीति विषुणः । लक्ष्मी अस्यास्तीति लक्ष्मणः ।

(२) कुत्सिता जटा अस्य सन्तीति जटिलः । एवं घटिकः, कालिकः ॥

(३) शिखादिभ्य इनिरेवेष्यते न तु ठन् ॥

(४) यवखदादिभ्य इनिरेवेष्यते ठनादुभयम् ॥

(५) विवृद्ध्युपाधिभूतात् स्वाङ्गवाचिनः प्रातिपदिकादिलच् । होनौ

१४६—अर्शआदिभ्योऽच् ॥ अ० ५ । २ । १२७ ॥
अर्शआदिप्रातिपदिकेभ्यो मत्वर्थेऽच् प्रत्ययो भवति । अर्शांस्यस्य विद्यन्ते स, अर्शसः ।

१७१—अर्शआदि—अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घटा । अभ्र । कर्दम । आम । लवण ॥ स्वाङ्गाद्धीनात् ॥ वर्णात् ( १ ) ॥ आकृतिगणोऽयम् । इत्यर्शआदयः ॥

१४७—सुखादिभ्यश्च ॥ अ० ५ । २ । १३१ ॥
सुखादिप्रातिपदिकेभ्यो मत्वर्थे इनिः प्रत्ययो भवति । मतुबादीनामपवादः । सुखमस्यास्तीति सुखी, दुःखी ।

१७२—सुखादि—सुख । दुःख । तृप्र । कृच्छ्र । आम । अलीक । करुणा । कृपण । सोढ । प्रमीप । शील । हल ॥ माला क्षेपे (२) ॥ प्रणय ॥ इति सुखादयः ॥

१४८—पुष्करादिभ्यो देशे ॥ अ० ५ । २ । १३५ ॥
पुष्करादिप्रातिपदिकेभ्यो मत्वर्थे देशेऽभिधेये इनिः प्रत्ययो भवति । पुष्कराऽस्मिन्निति पुष्करी देशः, पद्मी वा । देशे इति किम्—पुष्करवान् हस्ती ।

१७३—पुष्करादि—पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल । कर्दम । शालूक । विगर्ह । करीष ।

---

नासिकाऽस्यास्तीति नासिकिलः, कम्बौ कर्णौ यस्य स कम्बिलः, औडिलः ॥

( १ ) हीनशब्दात्परस्मात् स्वाङ्गादजेव स्यान्न तु मतुबादिः अक्षिभ्यां हीनो हीनाक्षः । हीनहस्तः । हीनबाहवः । वर्णादिति श्वेतादेर्ग्रहणं मत्वकारादेः । श्वेतो वर्णोऽस्यास्तीति श्वेतः, नील, काल, पीत, हरितः, इत्यादि ॥

( २ ) कुत्सिता मालाऽस्यास्तीति माली । मतुप् मा भूत् ॥

।शरीष । यवास । प्रवास । हिरण्य । कैरव । कल्लोल । तरङ्ग । वयस । इति पुष्करादयः ॥

१४६—बलादिभ्यो मतुबन्यतरस्याम् ॥अ०५।२।१३६॥

बलादिप्रातिपदिकेभ्यो मत्वर्थे विकल्पेन मतुप्, पक्ष इनिः, ठक् तु न भवति । बलमस्यास्तीति बलवान्, बली ।

१४७—बलादि—बल । उत्साह । उद्भाव । उद्वास । उद्वाम । शिखावल । पूगमूल । दंश । कुल । आयाम । व्यायाम । उपयाम । आरोह । अवरोह । परिणाह । युद्ध । इति बलादयः ॥

१५०—देवपथादिभ्यश्च ॥ अ० ५ । ३ । १०० ॥

देवपथादिप्रातिपदिकेभ्यो इवार्थे प्रतिकृतौ संज्ञायां च विहितस्य कन्प्रत्ययस्य लुप् भवति । देवपथस्येव प्रतिकृतिः, देवपथः, हंसपथः।

१७४—देवपथादि—देवपथ । हंसपथ । वारिपथ । जलपथ । राजपथ । शतपथ । सिंहगति । उष्ट्रग्रीवा । चामरज्जु । रज्जु । हस्त । इन्द्र । दण्ड । पुष्प । मत्स्य । स्थपथ । शङ्कुपथ । सिंहपथ । आकृतिगणोऽयम् । इति देवपथादयः ॥

१५१—शाखादिभ्यो यत् ॥ अ० ५ । ३ । १०३ ॥

शाखादिप्रातिपदिकेभ्यो इवार्थे यत् प्रत्ययो भवति । शाखेव शाख्यः, मुख्यः ।

१७६—शाखादि—शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । स्कन्ध । शिरस् । उरस् । अग्र । शरण । इति शाखादयः ॥

१५२—शर्करादिभ्योऽण् ॥ अ० ५ । ३ । १०७ ॥

शर्करादिप्रातिपदिकेभ्यो इवार्थेऽण् प्रत्ययो भवति । शर्करेव शार्करम् ।

१७७—शर्करादि—शर्करा । कपालिका । पिष्टिका । कनिष्ठिक ।

कपिष्ठिक। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नराचि। नकुल। सिकता। इति शर्करादयः॥

१५३—अङ्गुल्यादिभ्यष्ठक्॥ अ० ५। ३। १०८॥

अङ्गुल्यादिप्रातिपदिकेभ्यो इवार्थे ठक् प्रत्ययो भवति। अङ्गुलिरिवाङ्गुलिकः।

१७८—अङ्गुल्यादि—अङ्गुलि। भरुज। बभ्रु। वल्गु। मण्डर। मण्डल। शष्कुल। कपि। उदश्वित्। गोणी। उरस्। शिखा। कुलिश। इत्यङ्गुल्यादयः॥

१५४—दामन्यादित्रिगर्त्तषष्ठाच्छः॥अ० ५।३।११६॥

दामन्यादिभ्यस्त्रिगर्त्तषष्ठेभ्यश्चायुधजीविसंघवाचिभ्यः प्रातिपदिकेभ्यः स्वार्थे छः प्रत्ययो भवति। त्रिगर्त्त-षष्ठो येषां ते त्रिगर्त्तषष्ठाः। दामन्येव दामनीयः, दामनीयौ, दामन्यः। तद्राजत्वाद् बहुवचने लुक्। *त्रिगर्त्तषष्ठाः—कौण्डोपरथ एव कौण्डोपरथीयः, अन्यत्पूर्ववत्*, दाण्डकि, क्रौष्टकि, जालमानि, ब्रह्मगुप्त, जानकि इति त्रिगर्त्तषष्ठाः। अत्र जानकिरित्यस्यैव त्रिगर्त्त इति नामान्तरम्।

१७६—दामन्यादि—दामनि। औलपि। आकिदन्ती। काकरन्ति। काकदन्ति। शत्रुन्तपि। सार्वसेनि। बिन्दु। मौञ्जायन। उलभ। सावित्रीपुत्र। अच्युतन्ति। कोकवन्ती। तुलभ। देववापि। औतकी। अपच्युतकी। कर्की। पिण्ड। इति दामन्यादयः॥

१५५—पर्श्वादियौधेयादिभ्यामणञौ॥अ०५।३।११७॥

पर्श्वादिभ्यो यौधेयादिभ्यश्चायुधजीविसंघवाचिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽणञौ प्रत्ययौ यथासंख्यं भवतः। पर्शुरेव पार्शवः, यौधेयः।

१८०—पर्श्वादि—पर्शु। असुर। रक्षस्। बाल्हीक। वयस्। मरुत्। दशार्ह। पिशाच। विशाल। अशनि। कार्षापण। सत्वत्। वसु। इति पर्श्वादयः॥

१८१—यौधेयादि—यौधेय। कौशेय। क्रौशेय। शौक्रेय। शौभ्रेय। धार्तेय। वार्तेय। जाबालेय। त्रिगर्त। भरत। उशीनर। इति यौधेयादयः॥

१५६—स्थूलादिभ्यः प्रकारवचने कन् ॥ अ० ५।४।३॥

स्थूलादिभ्यः प्रातिपदिकेभ्यः प्रकारवचने द्योत्ये कन् प्रत्ययो भवति। स्थूलप्रकारः स्थूलकः॥

१८२—स्थूलादि—स्थूल। अणु। माष। इषु॥ कृष्ण तिलेषु॥ यव व्रीहिषु॥ इक्षुतिलपाद्यकालावदाताः सुरायाम्॥ गोमूत्र आच्छादने॥ सुराया अहौ॥ जीर्ण शालिषु॥ पत्रमूले समस्तव्यस्ते (१)॥ कुमारीपुत्र। कुमार। श्वशुर। मणि। इति स्थूलादयः॥

१५७—यावादिभ्यः कन् ॥ अ० ५। ४। २९॥

यावादिभ्यः प्रातिपदिकेभ्यः स्वार्थे कन् प्रत्ययो भवति। याव एव यावकः॥

१८३—यावादि—याव। मणि। अस्थि। चण्ड। पीतस्तम्भ॥ ऋतावुष्णशीते॥ पशौ लूनवियाते॥ अणु निपुणे॥ पुत्र कृत्रिमे॥ स्नात वेदसमाप्तौ॥ शून्य रिक्ते॥ दान कुत्सिते॥ तनु सूत्रे (२)॥ ईयसश्च॥ श्रेयस्कः। ज्ञात॥ कुमारीक्रीडनकानि च॥ इति यावादयः॥

१५८—विनयादिभ्यष्ठक्॥ अ० ५। ४। ३४॥

---

(१) कृष्णप्रकाराः कृष्णकास्तिलाः। यवका व्रीहयः। इक्षुका, तिलका, पाद्यका, कालका, अवदातका वा सुरा। गोमूत्रकमाच्छादनम्। सुराकः सर्पः। जीर्णकाः शालयः। समस्तम्—पत्रमूलप्रकारः पत्रमूलकः व्यस्तम्—पत्रकम्, मूलकम्।

(२) उष्णकः, शीतको वा ऋतुः। लूनकः, वियातको वा पशुः। अणुको निपुणः। पुत्रकः कृत्रिमः। स्नातको वेदसमाप्तः। शून्यकं रिक्तम्। कुत्सितं दानं दानकम्। तनुकं सूत्रम्।

द्विदण्ड्यादिशब्देषु , बहुव्रीहिसमासे समासान्त इच् प्रत्ययो निपात्यते । द्वाभ्यां दण्डाभ्यां हन्यतेऽसौ द्विदण्डि । अव्ययीभावसमासे परिगणनमतोऽव्ययत्वम् ( १ ) । एवं द्विमुसलि ॥

१८७—द्विदण्ड्यादि—द्विदण्डि । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । उभादन्ति । उभयादन्ति । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाबाहु । उभयाबाहु ( २ ) । एकपदि । प्रोह्यपदि । आढ्यपदि । सपदि । निकुच्यकर्णि । संहतपुच्छि । इति द्विदण्ड्यादयः ॥

१६२-पादस्य लोपोऽहस्त्यादिभ्यः ॥ अ० ५।४।१३८ ॥

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपो बहुव्रीहौ । व्याघ्रपादाविव पादावस्य. स व्याघ्रपात । अहस्त्यादिभ्य इति किम ।

विनयादिप्रातिपदिकेभ्यः स्वार्थे ठक् प्रत्ययो भवति। विनय एव वैनयिक।

१८४—विनयादि—विनय। समय॥ उपायाद्ध्रस्वत्व च॥ औपयिक। सङ्गति। कथंचित्। अकस्मात्। समयाचार। उपचार। समाचार। व्यवहार। सम्प्रदान। समुत्कर्ष। समूह। विशेष। अत्यय। अरिथ। कराडु। इति विनयादय॥

१५६–प्रज्ञादिभ्यश्च॥ अ० ५। ४। ३८॥

प्रजानातीति प्रज्ञ। प्रज्ञादिप्रातिपदिकेभ्य स्वार्थेऽण् प्रत्ययो भवति। प्रज्ञ एव प्राज्ञ। प्राज्ञी स्त्री। यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति।

१८५—प्रज्ञादि—प्रज्ञ। वणिक्। उशिक्। उष्णिक्। प्रत्यक्ष। विद्वस्। विदन्। षोडन्। षोडश। विद्या। मनस्। श्रात्र शारीरे। श्रोत्रम्। जुह्वत्। कृष्ण मृगे। कार्ष्ण्य। चिकीर्षत्। चोर। शत्रु। योध। वक्षस्। चक्षुस्। धूर्त्त। वसु। एत। मरुत्। क्रुङ्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर। असुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। इति प्रज्ञादय॥

१६०–अव्ययीभावे शरत्प्रभृतिभ्यः॥अ०५।४।१०७॥

शरद् इत्येवमादिभ्य प्रातिपदिकेभ्यष्टच् प्रत्यया भवति समासान्तोऽव्ययीभावे। उपशरदम्, प्रतिशरदम्, उपविपाशम्। अव्ययीभाव इति किम्—परमशरत्।

१८६—शरदादि—शरत्। विपाश्। अनस्। मनस। उपानह। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। चतुर। यद्। तद्॥ जराया जरस्॥ सदृश्॥ प्रतिपरसमनुभ्योऽक्ष्णः॥ पथिन्॥ प्रत्यक्षम्। परोक्षम्। समक्षम्। अन्वक्षम्। प्रतिपथम्। परपथम्। सम्पथम्। अनुपथम्। इति शरत्प्रभृतय॥

१६१–द्विदण्ड्यादिभ्यश्च॥ अ० ५। ४। १२८॥

द्विदण्ड्यादिशब्देषु बहुव्रीहिसमासे समासान्त इच् प्रत्ययो निपात्यते । द्वाभ्यां दण्डाभ्यां हन्यतेऽसौ द्विदण्डि । अव्ययीभावसमासे परिगणनमतोऽव्ययत्वम् (१) । एवं द्विमुसलि ॥

१८७—द्विदण्ड्यादि—द्विदण्डि । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । उभादन्ति । उभयादन्ति । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाबाहु । उभयाबाहु (२) । एकपदि । प्रोष्ठपदि । आढ्यपदि । सपदि । निकुच्यकर्णि । संहतपुच्छि । इति द्विदण्ड्यादयः ॥

१९२-पादस्य लोपोऽहस्त्यादिभ्यः ॥अ०५।४।१३८॥

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपो बहुव्रीहौ । व्याघ्रपादाविव पादावस्य, स व्याघ्रपात् । अहस्त्यादिभ्य इति किम् । हस्तिपादः ॥

१८८—हस्त्यादि—हस्तिन् । कटोल । गण्डोल । गण्डोलक । महिला । दासी । गणिका । कुसूल । इति हस्त्यादयः ॥

१९३-कुम्भपदीषु च ॥ अ० ५ । ४ । १३९ ॥

कुम्भपदीप्रभृतयः कृतपादसमासान्तलोपाः समुदाया बहुव्रीहौ समासे निपात्यन्ते ।

१८९—कुम्भपद्यादि—कुम्भपदी । शतपदी । अष्टापदी । जालपदी । एकपदी । मालापदी । मुनिपदी । गोधापदी । गोपदी । कलशीपदी । घृतपदी । दासीपदी । निष्पदी । आर्द्रपदी । कुणपदी । कृष्णपदी । द्रोणपदी । द्रुपदी । शकृत्पदी । सूपदी । पञ्चपदी ।

---

(१) सिद्धान्तकौमुद्यां 'द्व्यन्यसंख्यविहार' इति पाठः । स० पृ० ५ । सु० मी० ।

(२) अत्रोभयत्र निपातनादिच् प्रत्ययस्य लोपः प्रत्ययलक्षणेन चाव्ययीभावसंज्ञा भवत्येव । अत्रापि केचित्कृत्स्नमुभयसमासान्त विधीयते । नेऽर्थसङ्गत्या ज्ञेया ॥

अर्वपदी । स्तनपदी । स्थूलपदी । सूत्रपदी । कलहंसपदी । द्विपदी । विपुपदी । सुपदी । सूकरपदी । सूचीपदी । इति कुम्भपदीप्रभृतयः ॥

१६४—उरःप्रभृतिभ्यः कप् ॥ अ० ५ । ४ । १५१ ॥

उर प्रभृत्यन्ताद्बहुव्रीहेः समासान्त. कप् प्रत्ययो भवति । व्यूढमुरोऽस्य स व्यूढोरस्कः । प्रियसर्पिष्कः ॥

१६०—उरसादि—उरस् । सर्पिस् । उपानह् । पुमान् । अनड्वान् । नौ । पयः । लक्ष्मीः । दधि । मधु । शालिः ॥ अर्थान्नञः ॥ अनर्थकः । इत्युरस्प्रभृतयः ॥

१६५—वा०—शकन्ध्वादिषु पररूपं वक्तव्यम् ॥ अ० ६ ॥ १ । ९४ ॥

शकन्ध्वादिषु पररूपं भवति । शकानामन्धुः शकन्धुः ।

१६१—शकन्ध्वादि—शकन्धु । कुलटा ॥ सीमन्तः केशेषु ॥ कर्कन्धु. । हलीषा । मनीषा ॥ इति शकन्ध्वादयः ॥

१६६—पारस्करप्रभृतीनि च संज्ञायाम् ॥ अ० ६ ॥ १ । १५७ ॥

पारस्करप्रभृतीनि शब्दरूपाणि संज्ञाया विषये निपात्यन्ते । पारस्करो देशः ॥

१६२—पारस्करादि—पारस्करो देशः । कारस्करो वृक्षः । रथस्पा नदी । किष्कु प्रमाणम् । किष्किन्धा गुहा ॥ तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ॥ तस्करः चोरः । बृहस्पतिर्देवता ॥ प्रात्तुम्पतौ गविकर्तरि ॥ प्रस्तुम्पति गौः । पारस्करप्रभृतिराकृतिगणः ॥ अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः ॥ इति पारस्करप्रभृतीनि ॥

१६७—उञ्छादीनाञ्च ॥ अ० ६ । १ । १६० ॥

उञ्छादीनां शब्दानामन्त उदात्तः स्वरो भवति।

उञ्छ। म्लेच्छ। जञ्ज। जल्प। जप। व्यध। वध॥ युग कालविशेषे रथाद्युपकरणे च॥ गरो दूष्येऽवन्त॥ वेगवेदचेष्टबन्धाः करणे॥ स्तुयुद्रुवश्छन्दसि॥ परिष्टुत्। संयुत्। परिद्रुत्॥ वर्तनिः स्तोत्रे॥ श्वभ्रे दरः॥ साम्बतापौ भावगर्हायाम्॥ उत्तमशश्वत्तमौ सर्वत्र॥ भक्षमन्थभोगदेहाः॥ इत्युञ्छादयः॥

१६८—वृषादीनाञ्च॥ अ० ६। १। २०३॥

वृषादीनामादिरुदात्तो भवति।

१५३—वृषादि—वृषः। जनः। ज्वरः। ग्रहः। हयः। गयः। नयः। तयः। चयः। वेदः। अंशः। दवः। सूदः। गुहा॥ शमरणौ संज्ञायां संमतौ भावकर्मणोः॥ मन्त्रः। शान्तिः। कामः। यामः। आरा। धारा। कारा। वहः। कल्पः। पादः। आकृतिगणोऽयम्। अविहितलक्षणमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम्॥ इति वृषादयः॥

१६९—कार्तकौजपादयश्च॥ अ० ६। २। ३७॥

कृतद्वन्द्वसमासाः कार्तकौजपादयः शब्दाः पूर्वपदप्रकृतिस्वरा भवन्ति। कृतस्यापत्यं कार्तः। कुजपस्यापत्यम् कौजपः। कार्तश्च कौजपश्च कार्तकौजपौ।

१५४—कार्तकौजपादि—कार्तकौजपौ। सावर्णिमाण्डूकेयौ। आवन्त्यश्मकाः। पैलश्यापर्णेयाः। कपिश्यापर्णेयाः। शैतिकाक्षपाञ्चालेयाः। कटुकवार्चलेयाः। शाकलशुनकाः। शाकलसणकाः। शुनकधात्रेयाः। सणकबाभ्रवाः। आर्चाभिमौद्गलाः। कुन्तिसुराष्ट्राः। चिन्तिसुराष्ट्राः। तण्डवतण्डाः। गर्गवत्साः। अविमत्तकामविद्धाः। बाभ्रवशालङ्कायनाः। बाभ्रवदानच्युताः। कठकालापाः। कठकौथुमाः। कौथुमलौकाक्षाः। स्त्रीकुमारम्। मौदपैप्पलादाः। द्विपाठः समासान्तोदात्तार्थः। वत्सजरत्। सौश्रुतपार्थवाः। जरामृत्यू। याज्यानुवाक्ये। इति कार्तकौजपादयः॥

१७०–कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च ॥अ० ६।२।४२॥

कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बल इत्येषां समासानां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरूणां गार्हपतं कुरुगार्हपतम्। रिक्तो गुरुः रिक्तगुरुः। असूता जरती असूतजरती। अश्लीला दृढरूपा अश्लीलदृढरूपा। दास्या भारो दासीभारः।

१६५–दासीभारादि–दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। वसुनीतिः। ओषधिः। चन्द्रमाः। अविहितलक्षणः पूर्वपदप्रकृतिस्वरो दासीभारादिषु द्रष्टव्यः॥

१७१–युक्तारोह्यादयश्च॥ अ० ६। २। ८१॥

युक्तारोह्यादिषु पूर्वपदमाद्युदात्तं निपात्यते।

१६६–युक्तारोह्यादि–युक्तारोही। आगतरोही। आगतयोधी। आगतवञ्ची। आगतनर्दी। आगतप्रहारी। आगतमत्स्या। क्षीरहोता। भगिनीभर्ता। ग्रामगोधुक्। अश्वत्रिरात्रः। गर्गत्रिरात्रः। व्युष्टत्रिरात्रः। शणपादः। समपादः। एकशितिपात्॥ पात्रेसम्मितादयश्च। इति युक्तारोह्यादयः॥

१७२–घोषादिषु च॥ अ० ६। २। ८५॥

घोषादिषु चोत्तरपदेषु परेषु पूर्वपदमाद्युदात्तं भवति।

१६७–दाक्षिघोषादि–दाक्षिघोषः। दाक्षिकटः। दाक्षिपल्वलः। दाक्षिवल्लभः। दाक्षिह्रदः। दाक्षिबदरी। दाक्षिपिङ्गलः। दाक्षिपिशङ्गः। दाक्षिशालः। दाक्षिरक्षः। दाक्षिशिल्पी। दाक्ष्यश्वत्थः। क्षुन्दतृणम्। दाक्षिशाल्मली। आश्रममुनिः। शाल्मलिमुनिः। दाक्षिपुंसा। दाक्षिकूटः। इति घोषादयः॥

१७३–छात्र्यादयः शालायाम्॥ अ० ६। २। ८६॥

शालायामुत्तरपदे छात्र्यादय आद्युदात्ता भवन्ति । छात्रिशाला ।

१९८—छात्र्यादि—छात्रि । ऐलि । भाण्डि । व्याडि । आपिशालि । आखण्डि । आपारि । गौमि । इति छात्र्यादयः ॥

१७४-प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ अ० ६ । २ । ८७ ॥

प्रस्थ उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवति । इन्द्रप्रस्थः, कुण्डप्रस्थः । अवृद्धमिति किम्—दाक्षिप्रस्थः । अकर्क्यादीनामिति किम्—कर्कीप्रस्थः ।

१९९—कर्क्यादि—कर्की । मघी । मकरी । कर्कन्धू । शमी । करीर । कटुक । कुवल । कवल । बदर । इति कर्क्यादयः ॥

१७५-मालादीनां च ॥ अ० ६ । २ । ८८ ॥

प्रस्थ उत्तरपदे मालादय आद्युदात्ता भवन्ति । मालाप्रस्थः, शालाप्रस्थः ।

२००—मालादि—माला । शाला । शोणा । द्राक्षा । क्षौमा । क्षामा । काञ्चा । एक । काम । इति मालादयः ॥

१७६-क्रत्वादयश्च ॥ अ० ६ । २ । ११८ ॥

सोरुत्तरपदस्थाः क्रत्वादयो बहुव्रीहौ समासे आद्युदात्ता भवन्ति । सुक्रतु ।

२०१—क्रत्वादि—क्रतु । दृशीक । प्रतीक । प्रतूर्ति । हव्य । भाग । इति क्रत्वादयः ॥

१७८–वर्ग्यादयश्च ॥ अ० ६ । २ । १३१ ॥

वर्ग्यादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे आद्युदात्तानि भवन्ति ॥

२०३—वर्ग्यादि—दिगादिषु ( ४ । ३ । ५४ ) ये वर्ग पूग गण इत्यादयः पठ्यन्ते त एव यत्प्रत्ययान्ता इह गृह्यन्ते ॥

१७९–चूर्णादीन्यप्राणिषष्ठ्याः ॥ अ० ६।२।१३४ ॥

तत्पुरुषसमासेऽप्राणिवाचिनः षष्ठ्यन्तात्पराणि चूर्णादीन्युत्तरपदानि आद्युदात्तानि भवन्ति । मुद्गस्य चूर्णं मुद्गचूर्णम् ।

२०४—चूर्णादि—चूर्ण । करिप । करिष । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम् । दलप । चमसी । चक्कन । चक्कन । चौल । इति चूर्णादीनि ॥

१८०–उभे वनस्पत्यादिषु युगपत् ॥अ०६।२।१४०॥

वनस्पत्यादिषु समासेषूभे पूर्वोत्तरपदे युगपत्प्रकृतिस्वरे भवतः ।

२०५—वनस्पत्यादि—वनस्पतिः । बृहस्पतिः । शचीपतिः । तनूनपात् । नराशंसः । शुनःशेपः । शण्डामर्कौ । तृष्णावरूत्री । बम्बाविश्ववयसौ । मर्मृत्युः । इति वनस्पत्यादयः ॥

१८१–संज्ञायामनाचितादीनाम् ॥अ०६।२।१४६॥

संज्ञाया विषये गतिकारकोपपदात्परं क्तान्तमुत्तरपदमन्तोदात्तं भवति, आचितादीन् वर्जयित्वा । संभूत, धनुष्खाता । अनाचितादीनामिति किम्—आचितम्, पर्याचितम् ।

२०६—आचितादि—आचितम् । पर्याचितम् । आस्थापितम् । निरुक्तम् । प्रतिपन्नम् । अपश्लिष्टम् । उपहतम् । उपस्थितम् । संहितागवि । इत्याचितादयः ॥

१८२–प्रवृद्धादीनां च ॥ अ० ६ । २ । १४७ ॥

प्रवृद्धादिशब्दानां क्तान्तमुत्तरपदमन्तोदात्तं भवति । प्रवृद्धं यानम् ।

२०७—प्रवृद्धादि—प्रवृद्धो वृषल । प्रयुताः सततः ।

आकर्षेऽवहित' । अवहितो भोगेषु । खट्वारूढः । कविशस्तः । आकृतिगणत्वात् पुनरुत्स्यूतं वासो देयम् । पुनर्निष्कृतो रथः । इति अपूढादयः ॥

१८३—कृत्योकेष्णुच्चार्वादयः ॥ अ० ६।२।१६० ॥

कृत्य, उक, इष्णुच् इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति । अकर्तव्यम्, अकरणीयम्, अनागामुकम्, अनलंकरिष्णुः; अचारुः, असाधुः ।

२०८—चार्वादि—चारु । साधु । यौधिक । अनङ्गमेजय । वदान्य । अकस्मात् ॥ वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमान शोभमानाः संज्ञायाम् ॥ विकारसदृशे व्यस्तसमस्ते ॥ गृहपति । गृहपतिक ॥ राजाह्नोश्छन्दसि ॥ इति चार्वादयः ॥

१८४—न गुणादयोऽवयवाः ॥ अ० ६ । २ । १७६ ॥

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः । बह्वक्षरं पदम् । अवयवा इति किम्—बहुगुणो ब्राह्मणः ।

२०९—गुणादि—गुण । अक्षर । छन्दस् । सूक्त । अध्याय । आकृतिगणः । इति गुणादयः ॥

१८५—निरुदकादीनि च ॥ अ० ६ । २ । १८४ ॥

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि निपात्यन्ते ।

२१०—निरुदकादि—निरुदकम् । निरुलपम् । निरुपलम् । निर्मशकम् । निर्मक्षिकम् । निष्कालकः । निष्कालिकः । निष्पेषः । दुस्तरीपः । निस्तरीपः । निस्तरीक । निरजिनम् । उदजिनम् । उपाजिनम् ॥ परेर्हस्तपादकेशकर्षाः ॥ परिहस्तः । परिपादः । परिकेशः । परिकर्षः । आकृतिगणोऽयम् । इति निरुदकादयः ।

१८६—अभेर्मुखम् ॥ अ० ६ । २ । १८५ ॥

तत्पुरुषसमासे प्रतेरुत्तरा अंश्वादयोऽन्तोदात्ता भवन्ति । प्रतिगतोंशुः प्रत्यंशुः ।

२११—अंश्वादि—अंशु । जन । राजन् । उष्ट्र । खेटक । अजिर । आर्द्रा । श्रवण । कृत्तिका । अर्ध । पुर । इत्यंश्वादय ॥

१८७-उपाद् द्व्यजजिनमगौरादयः॥ अ०६।२।१९४॥

उपादुत्तरं यद् द्व्यच्छब्दरूपमजिनं च तत्पुरुषसमासे गौरादिवर्जितमन्तोदात्तं भवति । उपगतोदेवमुपदेव , उपसोम , उपाजिनम् । अगौरादय इति किम्—उपगौर ।

२१२—गौरादि—गौर । नैष । तैल । लेट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्प । पाद । इति गौरादय ॥

१८८-स्त्रियाः पुंवद्भाषितपुंस्कादनूङ समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ अ० ६ । ३ । ३४ ॥

भाषितपुंस्कशब्दात्परस्य समानाधिकरणस्त्रीलिङ्गे पूरणीप्रियादिवर्जिते उत्तरपदे परत पुंशब्दस्येव रूपं भवति । दर्शनीया भार्या यस्य स दर्शनीयभार्यः, दीर्घजङ्घः । अप्रियादिष्विति किम् । कल्याणीप्रियः ।

२१३—प्रियादि—प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्ति । सचिवा । अम्बा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । इति प्रियादय ॥

१८९-पृषोदरादीनि यथोपदिष्टम् ॥ अ०६।३।१०९ ॥

पृषोदरादीनि शब्दरूपाणि यथोपदिष्टानि साधूनि भवन्ति ।

२१४—पृषोदरादि—पृषोदर । पृषोद्वान । बलाहक । जीमूत । श्मशान । उलूखला । पिशाच । बृसी । मयूर । आकृतिगण. । ...नि अश्वत्थकपित्थप्रभृतय द्रष्टव्याः । इति पृषोदरादीनि ॥

१९०–वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ॥ अ० ६ । ३ । ११७ ॥

वन, गिरि, इत्येतयोरुत्तरपदयोः परयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च संज्ञायां विषये दीर्घो भवति । कोटरावणम्, किंशुलकागिरिः ।

२१५—कोटरादि—कोटर । मिश्रक । पुरग । सिध्रक । सारिक । इति कोटरादयः ।

२१६—किंशुलकादि—किंशुलक । साल्वक । अञ्जन । लोहित । कुक्कुट । इति किंशुलकादयः ।

१९१–मतौ बह्वचोऽनजिरादीनाम् ॥ अ० ६ । ३ । ११९ ॥

मतौ प्रत्यये परतोऽजिरादिवर्जितस्य बह्वचो दीर्घो भवति संज्ञायां विषये । उदुम्बरावती, मशकावती, अमरावती । अनजिरादीनामिति किम्—

२१७—अजिरादि—अजिरवती । खदिरवती । पुलिनवती । हंसकारण्डववती । चक्रवाकवती । इत्यजिरादयः ॥

१९२–शरादीनां च ॥ अ० ६ । ३ । १२० ॥

संज्ञायां विषये मतौ परतः शरादीनां च दीर्घो भवति । शरावती । वंशावती ।

२१८—शरादि—शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । इति शरादयः ॥

१९३–बिल्वकादिभ्यश्छस्य लुक् ॥ अ० ६ । ४ । १५२ ॥

बिल्वकादिभ्य उत्तरस्य भस्य छप्रत्ययस्य लुक् भवति, तद्धिते परतः । बैल्वकाः, वैणुकाः ।

२१९—बिल्वकादि—नडादिषु ( ४ । २ । ९१ ) ये बिल्वादयः पठ्यन्ते ते कुक्प्रागमा बिल्वकादयो भवन्ति ॥

१९४–द्वारादीनां च ॥ अ० ७ । ३ । ४ ॥

द्वारादीनां य्वाभ्यामुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति। किन्तु य्वाभ्यां पूर्वावैजागमौ भवतः। द्वारे नियुक्तः, दौवारिकः। स्वरमधिकृत्य कृतो ग्रन्थः, सौवरः।

२२०—द्वारादि—द्वार। स्वर। स्वाध्याय। व्यल्कश। स्वस्ति। स्फ्यकृत। स्वादुमृदु। श्वन्। स्व। इति द्वारादयः॥

१९५–स्वागतादीनां च ॥ अ० ७ । ३ । ७ ॥

स्वागतादीनां शब्दानां य्वाभ्यां पूर्वौ ञित् णित् कित् तद्धिते ऐजागमौ न भवतः। वृद्धिस्तु भवत्येव। स्वागतमित्याह स्वागतिकः, स्वाध्वरेण चरति स्वाध्वरिकः॥

२२१—स्वागतादि—स्वागत। स्वध्वर। स्वङ्ग। व्यङ। व्यवहार। स्वपति। इति स्वागतादयः॥

१९६–अनुशतिकादीनां च ॥ अ० ७ । ३ । २० ॥

ञिति णिति किति च तद्धिते परतोऽनुशतिकादिशब्दानां पूर्वपदस्योत्तरपदस्याचामादेरचः स्थाने वृद्धिर्भवति। अनुशतिकस्येदमानुशातिकम्।

२२२—अनुशतिकादि—अनुशतिक। अनुहोड। अनुसंवरण। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसत्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री॥ राजपुरुषात् ष्यञि॥ सूत्रनड॥ आकृतिगणोऽयम् (१)। इत्यनुशतिकादयः॥

१९७–न्यङ्क्वादीनां च ॥ अ० ७ । ३ । ५३ ॥

---

(१) अत्राकृतिगणेनेदमपि सिद्धं भवति—अभिगममर्हति, आभिगामिकः। अधिदेवे भवमाधिदैविकम्। आधिभौतिकम्। आध्यात्मिकम्। चतस्र एव विद्या, चातुर्वैद्यम्। स्वार्थे ष्यञ्।

न्यङ्क्वादिषु कुत्वं निपात्यते । नितरामञ्चतीति ।

२२८—न्यङ्क्वादि—न्यङ्कुः । मद्गुः । भृगुः । दूरेपाकः । फलेपाकः । क्षणेपाकः । दूरेपाका । फलेपाका । दूरेपाकु । फलेपाकुः । तक्रम् । वक्रम् । व्यतिषङ्गः । अनुषङ्गः । अवसर्गः । उपसर्गः । मेघः । श्वपाकः । मांसपाकः । कपोतपाकः । उलूकपाकः । संज्ञायाम् अर्घः, अवदाघः, निदाघः (१) । न्यग्रोधः । इति न्यङ्क्वादयः ॥

१६८—तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ अ० ८ । १ । २७ ॥

तिङन्तात् पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे वर्तमानानि अनुदात्तानि भवन्ति । पचति गोत्रम्, जल्पति गोत्रम् । कुत्सनाभीक्ष्ण्ययोरिति किम्—खनति गोत्रं समस्य कूपम् ।

२२९—गोत्रादि—गोत्र । ब्रुव । प्रवचन । प्रहसन । प्रकथन । प्रत्ययन । प्रपञ्च । प्राय । निचक्षण । अवचक्षण । स्वाध्याय । भूयिष्ठ ॥ नाम वा ॥

१६९—पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ॥ अ० ८ । १ । ६७ ॥

पूजनवाचिभ्यः काष्ठादिभ्यः परं पूजितवाचकपदमनुदात्तं भवति । काष्ठाध्यापकः काष्ठाध्यापकः ।

२३०—काष्ठादि—काष्ठ । दारुण । अमातापुत्र । अपुत्र । अद्भुत । अनुक्त । भृश । घोर । परम । सु । अति । अनुज्ञात । कल्याण । वेश । इति काष्ठादयः ॥

मकारान्तान्मकारोपधादवर्णान्तादवर्णोपधाच्च परस्य मतुपो मकारस्य वकारादेशो भवति, न तु यवादिभ्य. परस्य मस्य वो भवति। मान्तात्–किवान्, शंवान् । मकारोपधात्–शमीवान्, दाडिमीवान्। अवर्णान्तात्–वृक्षवान्, खट्वावान् । अवर्णोपधात्–यशस्वान्। मादुपधायाश्चेति किम्—अग्निमान्। अयवादिभ्य इति किम्—यवमान्।

२२६—यवादि—यव । दल्मि । ऊर्मि । भूमि । कृमि । क्रुञ्चा । वशा । द्राक्षा । ध्रूक्षा । वेशा । ध्रजि । ध्वजि । सञ्जि । वजि । भ्रजि । शाञ्जि । सिञ्जि । हरित् । शकुत् । गरुत् । इक्षु । मधु । द्रुम । मण्ड । धूम । आकृतिगणोऽयम् ॥

२०१–कस्कादिषु च ॥ अ० ८ । ३ । ४८ ॥

कस्कादिशब्देषु विसर्जनीयस्य सः षो वा कवर्गपवर्गयो परतः।

२२७—कस्कादि—कस्कः । कौतस्कुत. । भ्रातुष्पुत्रः । शुनःस्कर्णः । सद्यस्कालः । सद्यस्क्री । साद्यस्क । कांस्कान् । सर्पिष्कुण्डिका । धनुष्कपालम् । बर्हिष्पूलम् । यजुष्पात्रम् । अयस्काण्ड. । मेदस्पिण्डः । आकृतिगणोऽयम् । इति कस्कादयः ॥

२०२–सुषामादिषु च ॥ अ० ८ । ३ । ९८ ॥

सुषामादिषु सकारस्य मूर्धन्यादेशो निपात्यते । शोभनं साम यस्यासौ सुषामा ब्राह्मणः ॥

२२८—सुषामादि—सुषामा । निष्षामा । दुष्षेध. । सुषन्धिः । दुःषन्धिः । निषन्धिः । सुष्ठु । दुष्ठु ॥ गौरिषक्थः संज्ञायाम् । प्रतिष्णिका । जलाषाढम् । नौषेचनम् । दुन्दुभिःषेवनम् । अविहितलक्षणो मूर्धन्यः सुषमादिषु द्रष्टव्यः । इति सुषामादयः ॥

२०३–न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ अ० ८ । ३ । ११० ॥

रेफपरस्य सकारस्य सृपिसृजिस्पृहिसवनादीनां सस्य मूर्द्धन्यादेशो न भवति । रपर—विसृसिका, विसृप्य, विसृप, विसर्जनम्, सुस्पृशम्, निस्पृक्षम् ।

२२९—सवनादि—सवने सवने । सुत सुते । सामे सामे । सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । बृहस्पतिसव । शकुनिसवनम् । संवत्सरे संवत्सरे । मुसल मुसलम् । गोसनिम् । अश्वसनिम् । इति सवनादय ॥

## २०४–क्षुभ्नादिषु च ॥ अ० ८ । ४ । ३९ ॥

क्षुभ्ना इत्यादि शब्देषु नस्य णकारादेशो न भवति । यथाप्राप्तिनिषेध । क्षुभ्नाति । क्षुभ्नीत । क्षुभ्नन्ति ।

२३०—क्षुभ्नादि—क्षुभ्ना । नृनमन । नन्दिन् । नन्दन । नगर । नरीनृत्यत । नृत्तु । तृप्नोति । नर्त्तन । गहन । नन्दन । निवेष । निवास । अग्नि । अनूप ॥ आचार्यादणत्वं च । आचार्यभोगीन , आचार्यानी । हायन । हरिकादिभ्य वनोत्तरपदेभ्य संज्ञायाम् ॥ इरिका । तिमिर । समीर । कुबेर । हरि । कर्मार । क्षुभ्नादिराकृतिगण ॥ इति क्षुभ्नादय ।

॥ समाप्तश्चाय ग्रन्थ ॥

ऋषि दयानन्द कृत ग्रन्थ—

# वेदाङ्गप्रकाश (१४ भाग)

वेदाङ्गप्रकाश के अभी तक जितने संस्करण छपे हैं उन में व्याकरण आदि की बहुत सी अशुद्धियां हैं। इसलिये वेदाङ्गप्रकाश के शुद्ध संस्करण की कमी चिरकाल से अनुभव की जा रही थी। अतएव मण्डल की ओर से इस के शुद्ध, बुकसाइज, छात्रोपयोगी टिप्पणियों और विविध सूचियों से युक्त संस्करण सुन्दर रूप में छपाने की व्यवस्था की गयी है। इसके आठ भाग मण्डल प्रकाशित कर चुका है। शेष भाग भी शीघ्र प्रकाशित हो रहे हैं।

# संस्कार विधिः

वेदानुकूल गर्भाधानादि से लेकर अन्त्येष्टि पर्यन्त सोलह संस्कारों की पूर्ण विधि, वेद तथा ब्राह्मण ग्रन्थ तथा गृह्यसूत्रों के प्रमाण सहित तथा संस्कारों की कर्त्तव्य विधि आर्य भाषा (हिन्दी) में दी है। नवीन शोधित सप्तम संस्करण छप कर तय्यार है। बढ़िया कागज़, सुन्दर आकर्षक कवर, प्रचारार्थ अति स्वल्प लागत मात्र मूल्य ।।।=)

# ऋग्वेदादि भाष्य भूमिका

वेदों के सम्बन्ध में देशी और विदेशी विद्वानों द्वारा जनता में फैलाये हुए भ्रमों को दूर करने के लिये ऋग्वेदादिभाष्यभूमिका एक अपूर्व ग्रन्थ है। इस के अध्ययन से वेद के सम्बन्ध में उत्पन्न होने वाले अनेकानेक संशय दूर हो जाते हैं। यू० पी० सरकार ने भी अपनी यूनिवर्सिटी तथा गवर्नमेन्ट संस्कृत कालिज काशी के पाठ्यक्रम में इस पुस्तक को पाठ्य पुस्तक नियत किया है।

तृतीयावृत्ति मूल्य अजिल्द ७॥) सजिल्द १)

ओ३म्

# अथ वेदाङ्गप्रकाशः

तत्रत्यश्चतुर्दशो भागः

# निघण्टुः

## यास्कमुनिनिर्मितो वैदिककोषः

श्रीमत्स्वामिदयानन्दसरस्वतीकृतशब्दानुक्रमणिकया

सहितः

पठनपाठनव्यवस्थायां षोडशं पुस्तकम्

ओ३म्

# अथ वेदाङ्गप्रकाशः

तत्रत्यश्चतुर्दशो भाग

# निघण्टुः

## यास्कमुनिनिर्मितो वैदिककोषः

श्रीमत्स्वामिदयानन्दसरस्वतीकृतशब्दानुक्रमणिकया सहितः

पठनपाठनव्यवस्थायां षोडशं पुस्तकम्





सृष्ट्यब्दा १९७,२९,४९,०६२

सप्तमावृत्ति २००० } विक्रमीय संवत २०१८ { मूल्यम् ८१ न.पै.

निघण्टोः

# विषयसूचीपत्रम्

इति ॥

ओ३म्

# निघण्टुर्वैदिककोशः

---

## अथास्य भूमिका

यह ग्रन्थ ऋग्वेदी लोगों के पठितव्य दश ग्रन्थों में है। विशेष कर वेद और सामान्य से लौकिक ग्रन्थों में भी सम्बन्ध रखता है। यह मूल और इसका भाष्य 'निरुक्त' यह दोनों ग्रन्थ यास्कमुनिजी के बनाये हैं। सदा से चले आने से प्राचीन हैं। इस को बहुत पुस्तकों से मिलाकर जो जो पुस्तकान्तरों में विशेष शब्द पाये वे नोट में धर दिये हैं। अकारादिशब्दक्रम से इसकी शब्दानुक्रमणिका भी बनाकर छपवाई है कि जिसने जिस शब्द को देखना चाहे झटिति देख सकता है।

इसमें पांच अध्याय हैं। इसके प्रथम अध्याय में १७ खण्ड, द्वितीयाध्याय में २२, तृतीयाध्याय में ३०, चतुर्थाध्याय में ३ और पञ्चमाध्याय में ६ खण्ड हैं। इसकी शब्दानुक्रमणिका में प्रथम कोष्ठ में अकारादि शब्द और द्वितीय में जिसका नाम है, लिङ्ग

है। तृतीय अङ्क में अध्याय और चतुर्थ में खण्ड समझना। परन्तु यह सब शब्द वेद में यौगिक और योगरूढ़ि आते हैं, केवल रूढ़ि नहीं। इसमें जो पदनाम हैं वे पदधातु के गत्यर्थ अर्थात् ज्ञान गमन, प्राप्त्यर्थ के वाचक होकर यौगिक हो जाते हैं।

यह ग्रन्थ सर्वत्र उपलब्ध नहीं था, अब छपने से प्राप्त होने लगा है। इस से बड़ा उपकार यह होगा, कि जो पुराणवालों ने अर्थ का अनर्थ किया है, सो इन आर्षग्रन्थों से निवृत्त होकर सब के आत्मा में सत्य का प्रकाश होगा। निदर्शन—जैसे—पुराणी लोगों ने वृत्र, शम्बर और असुर शब्द से दैत्य, निघण्टु में—मेघ। पु०—अहि शब्द से सर्प, नि०—मेघ। पु०—अद्रि, गिरि तथा पर्वत से केवल पहाड़, नि०—मेघ। पु०—अश्मा, ग्रावा शब्दों से पाषाण और नि०—मेघ। पु०—वराह से सुअर, नि०—मेघ। पु०—धारा से जल का प्रवाह, नि०—वाणी। पु०—गौरी से महादेव की स्त्री, नि०—वाणी। पु०—कर्मकाण्डी 'स्वाहा' शब्द से अग्नि की स्त्री और स्वधाशब्द से पितृ की स्त्री, नि०—स्वाहा से वाणी और स्वधा से अन्न। पु०—शची शब्द से इन्द्र की स्त्री, नि०—में वाणी, कर्म और प्रज्ञा का नाम है।

है। पु०—घृताची शब्द से देवलोक की वेश्या विशेष स्त्री, और निघण्टु में—रात्रि का नाम है। आज कल के लोग विप्र शब्द से केवल ब्राह्मण, और निघण्टु में—बुद्धिमान् का नाम है। पु०—श्रद्धा से प्रीति और श्राद्ध से मृतकों की तृप्ति मानते हैं, और निघण्टु में—श्रत् शब्द से सत्य और जिस क्रिया से सत्य का ग्रहण हो वह श्रद्धा, और जो इससे धर्मयुक्त कर्म किया जाय सो श्राद्ध कहाता है।

अब कहां तक लिखें, मनुष्य लोग जब इस कोश को पढ़ेंगे, तभी नवीन पुराणादि ग्रन्थों का मिथ्यापन और वेदों का सत्यत्व तथा वेदों के अर्थ करने में प्रवृत्ति अपने आप होजायगी, तब तक वेदार्थ में प्रवृत्ति नहीं होती और व्याकरणादि का पढ़ना निष्फल है।

यद्यपि जहां तहां यन्त्रालयों में निघण्टु छपा है, तथापि इसके छापने का मुख्य प्रयोजन यही है कि अकारादिशब्दक्रम से इसके साथ शब्दानुक्रमणिका ठिकाने के सहित छपवादी है कि जिस शब्द को निकालना चाहें, उसको शब्दानुक्रमणिका के अनुकूल देख के शीघ्र निकाल लेवेंगे। इससे जिसको ग्रन्थ कण्ठस्थ न होगा वह भी शब्दानुक्रमणिका से लाभ ले सकेगा। अलमतिविस्तरेण बुद्धिमद्वर्येषु॥

इति भूमिका समाप्ता॥

---

निधि(९)रामा(३)ङ्क(९)चन्द्रे(१)ऽब्दे मार्गशीर्षसिते दले ।
चतुर्थ्यां गुरुवारेऽय निघण्टु शोधितोऽनघः ॥ १ ॥

श्रीमन्महामहिमविक्रमभूपतेरेकोनचत्वारिंशदुत्तर-
एकोनविंशतितमे संवत्सरे यन्नएाय मुनिवर
यास्कमुनिनिर्मित सशब्दानुक्रमणिको
निघण्टु प्रेषित ॥

स्थान—
महाराणाजी का
उदयपुर } दयानन्दसरस्वती

---

* ओ३म् *

# अथ निघण्टुः

## अथ प्रथमाध्यायारम्भः ॥

गौः । ग्मा । ज्मा । क्ष्मा । क्षा । क्षमा[1] । क्षोणिः[2] । क्षितिः । अवनिः । उर्वी । पृथ्वी । मही । रिपः[3] । अदितिः । इळा । निर्ऋतिः । भूः । भूमिः । पूषा । गातुः । गोत्रा । इत्येकविंशति पृथिवीनामधेयानि ॥ १ ॥

हेम[4] । चन्द्रम् । रुक्मम् । अयः । हिरण्यम् । पेशः । कृशनम् । लोहम् । कनकम् । काञ्चनम् । भर्म । अमृतम् । मरुत् । दत्रम् । जातरूपम् । इति पञ्चदश हिरण्यनामानि ॥२॥

अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः ।

---

1 इत्यस्य स्थाने क्षम क्षामा, क्षाम क्षाम इति चत्वारः शब्दाः पुस्तकान्तरेषु क्वचित् क्वचित दृश्यन्ते ॥

२ कृदिकारादक्तिन इति ङीपि सति क्षोणी इत्यपि भवति ॥

३ स्वरभेदेन रिपः इत्यपि पु० २ दृश्यते ॥

४ हेमा इत्यपि पु० २ ॥

अव्या॑ । पुष्क॑रम् । सग॑रः[1] । स॒मु॒द्रः । अ॒ध्व॒रम् । इति षोडशान्तरिक्षनामानि ॥ ३ ॥

स्वः॑ । पृश्निः॑ । नाकः॑[2] । गौः । वि॒ष्टप॑म् । नभः॑ । इति षट् साधारणानि ॥ ४ ॥

खेद॑यः । कि॒रणाः॑ । गावः॑ । र॒श्मयः॑[3] । अ॒भीश॑वः । दीधि॑तयः[4] । गभ॑स्तयः । वन॑म् । उ॒स्राः । वस॑वः । मरी॑चिपाः । म॒यूखाः॑ । स॒प्तऋष॑यः । सा॒ध्याः । सु॒प॒र्णाः । इति पञ्चदश रश्मिनामानि ॥ ५ ॥

आताः॑ । आशाः॑ । उप॑राः । आ॒ष्ठाः । काष्ठाः॑ । व्योम॑ । क॒कुभः॑ । ह॒रितः॑ । इत्यष्टौ दिङ्नामानि ॥ ६ ॥

श्यावी॑ । क्ष॒पा । शर्व॑री । अ॒क्तुः । ऊर्म्या॑ । राम्या॑[5] । यम्या॑ । नम्या॑ । दोषा॑ । नक्ता॑ । तमः॑ । रजः॑ । असि॑क्नी । पय॑स्वती । तम॑स्वती । घृ॒ताची॑ । शिरि॑णा[6] । मोकी॑ । शोकी॑ ।

---

१. 'सग॑रम्' इति लिङ्गभेदेन पुस्तकान्तरपाठः ॥

२. 'नाका॑' इति बहुवचनान्तं क्वचित् ॥

३. 'रश्म्य॑' इति ङीपि सति पु० २ ॥

४. दिधि॑तय इत्यपि पुस्तकान्तरपाठः ॥

५. 'रम्या॑' इति पाठ० पु० ॥

६. 'भीषा॑' इत्यपि पु० २ ॥

ऊध॑ः[1] । पय॑ः । हि॒मा[2] । व॒स्वी॑[3] । इति त्रयोविंशती रात्रिनामानि ॥ ७ ॥

वि॒भाव॑री । सू॒नरी॑ । भास्व॑ती । ओद॑ती । चि॒त्राम॑घा । अर्जु॑नी । वा॒जिनी॑ । वा॒जिनी॑वती[4] । सु॒म्नाव॑री । अ॒ह॒ना । द्यो॒त॒ना । श्वे॒त्या । अ॒रु॒षी[5] । सू॒नृता॑ । सू॒नृता॑वती । सू॒नृता॑वरी । इति षोडशोषोनामानि ॥ ८ ॥

वस्तो॑ः । द्यु॒ः[6] । भा॒नुः । वा॒स॒रम् । स्वस॑राणि । घ्रं॒सः । घ॒र्मः । घृ॒णः[7] । दिन॑म् । दिवा॑ । दि॒वेदि॑वे । द्यवि॑द्यवि । इति द्वादशाहर्नामानि ॥ ९ ॥

अद्रि॑ः । ग्रावा॑ । गो॒त्रः । व॒लः । अश्न॑ः । पु॒रु॒भोजा॑ः । व॒लि॒शा॒नः[8] । अश्मा॑ । पर्व॑तः । गि॒रिः । व्र॒जः । च॒रुः । व॒रा॒हः । शम्ब॑रः । रौ॒हि॒णः । रै॒व॒तः । फ॒लि॒गः । उप॑रः । उप॑लः । च॒म॒सः । अहि॑ः । अ॒भ्रम्[9] । व॒ला॒ह॒कः । मेघ॑ः ।

---

1 ऊधा॑' इत्यपि पु० २ ॥     2 हि॒म' इत्यपि पु० २ ॥

3 वसु॑ वस्वा॑, वस्वी॑ इत्यपि पु० २ ॥

4 'वाजिनीवती' इत्यपि पु० ॥     5 अरु॑षी इत्यपि पु० ॥

6 'द्यौः' इति पा० ॥     7 'घृणि॑' इत्यपि पु० ॥

8 'प॒शा॒न, प॒र्णा॒न' इमावपि क्वचित् ॥

9 अ॒म्बम्' इत्यपि पु० ॥

दृतिः[1] । ओदनः[2] । वृषन्धिः[3] । वृत्रः । असुरः । कोशः ।
इति त्रिंशन्मेघनामानि ॥ १० ॥

श्लोकः । धारा । इळा । गौः । गौरी । गान्धर्वी । गभीरा । गम्भीरा । मन्द्रा । मन्द्राजनी । वाशी । वाणी । वाणीची । वाणः । पविः । भारती । धमनिः । नाळीः[4] । मेळिः । मेना । सूर्या । सरस्वती । निवित् । स्वाहा । वग्नुः[5] । उपब्दिः । मायुः । काकुत्[6] । जिह्वा । घोषः । स्वरः । शब्दः । स्वनः । ऋक् । होत्रा । गीः । गाथा । गणः[7] । धेना । ग्नाः । विपा । नना[8] । कशा । धिषणा । नौः । अक्षरम् । मही । अदितिः । शची । वाक् । अनुष्टुप् । धेनुः । वल्गुः[9] । गल्दा[10] । सरः[11] । सुपर्णी[12] । बेकुरा[13] ।
इति सप्तपञ्चाशद् वाङ्नामानि ॥ ११ ॥

---

१. 'दृति' इति च पु० ॥
२. 'ओदनम्' इति नपुंसकम् पु० ॥
३. 'विषन्धि' इत्यपि पु० ॥
४. 'नालि', 'नालि' इमौ क्वचित् ॥
५. 'वग्नु' इति क्वचित् ॥
६. 'काकुप्' इति पु० ॥
७. 'गणा' इति पु० ॥
८. 'नमा' इति पु० ॥
९. 'वग्नु' इति पु० ॥
१०. 'गस्द, गल्द' इमौ पु० ॥
११. 'रस, रास' इमौ च पु० ॥
१२. 'सुपर्णो' इति च पु० ॥
१३. 'बेकु' इति पु० ॥

अर्णः । क्षोदः । क्षद्म[1] । नभः । अम्भः । कबन्धम्[2] । सलिलम् । वाः । वनम् । घृतम् । मधु । पुरीषम् । पिप्पलम् । क्षीरम् । विषम् । रेतः । कशः[3] । जन्म[4] । वृबूकम् । बुसम् । तुग्र्या । बुर्बुरम्[5] । सुक्षेम[6] । धरुणम् । सिरा[7] । अररिन्दानि[8] । ध्वस्मन्वत् । जामि[9] । आयुधानि । क्षपः । अहिः । अक्षरम्[10] । स्रोतः । तृप्तिः । रसः । उदकम्[11] । पयः । सरः । भेषजम् । सहः । शवः । यहः । ओजः । सुखम् । क्षत्रम् । आवयाः । शुभम् । यादुः[12] । भूतम् ।

---

१. 'क्षद्म; क्षद्म; क्षन्म' इमे त्रय पु० ॥

२. 'कवन्धम्' इति वकारभेदेन क्वचिद् दृश्यते ॥

३. 'शक, शकम्' इति पु० ॥

४. 'मर्श, जह्म' इमावस्यैव स्थाने पु० दृश्येते ॥

५. 'बुर्बुरम्; बुर्बुरः' इमौ च पूर्ववत् ॥

६. 'सुक्षेमा, सुक्षोम' एतौ च ॥

७. 'सुरा; सूरा' इति पु० ॥ ८. 'अरारिन्दानि' इति पु० ॥

९. 'जामि ; जामिवत्' इति पु० ॥

१०. 'अक्षर; अक्षरा' इति पाठान्तरम् ॥

११. 'पयः' इत्यपि पु० ॥ १२. 'यादः' इति क्वचित् पु० ।

भुवनम् । भविष्यत् । महत् । आपः । व्योम । यशः । महः । सर्णीकम्[1] । स्वृतीकम्[2] । सतीनम्[3] । गहनम् । गभीरम्[4] । गम्भरम्[5] । ईम्[6] । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्य योनिः । सत्यम् । नीरम् । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः । हेम[7] । स्वः । सर्गाः । शम्बरम् । अभ्वम् । वपुः । अम्बु[8] । तोयम् । तूयम् । कृपीटम्[9] । शुक्रम् । तेजः । स्वधा । वारि । जलम् । जलाषम् । इदम् । इत्येकशतमुदकनामानि ॥१२॥

अवनयः । यव्याः[10] । खाः । सीराः । स्रोत्याः । एन्यः । धुनयः । रुजानाः । वक्षणाः । खादोअर्णाः ।

---

१. 'स्वर्णीकम्' इति पु० ॥
२. 'सनीकम्, स्मृतीकम्' इति पु० ॥
३. 'सतिनम्' इति पु० । ४. 'गम्भीरम्' इति पु० ॥
५. 'गह्वरम्' इति पु० ॥ ६. 'कम्' इत्यधिकं क्वचित् पु० ॥
७. 'हेमा' इति पु० ॥
८. 'अम्बु' इति लिङ्गभेदेन क्वचित् ॥
९. 'कृपीटम्, नृपीटम्' इति पुस्तकान्तरपाठः ॥
१०. 'यह्वः' इति पु० ॥

रोधचक्राः । हरितः । सरितः । अग्रुवः । नभन्वः[1] । वध्वः ।
हिरण्यवर्णाः । रोहितः । सस्रुतः । अर्णाः । सिन्धवः ।
कुल्याः । वर्यः[2] । उर्व्यः । इरावत्यः । पार्वत्यः[3] । स्रवन्त्यः[4] ।
ऊर्जस्वत्यः । पयस्वत्यः । सरस्वत्यः । तरस्वत्यः । हरस्वत्यः ।
रोधस्वत्यः । भास्वत्यः । अजिराः । मातरः । नद्यः ।
इति सप्तत्रिंशन्नदीनामानि ॥ १३ ॥

अत्यः । हयः । अर्वा । वाजी । सप्तिः । वह्निः ।
दधिक्राः । दधिक्रावा । एतग्वः[5] । एतशः । पैद्वः । दौर्गहः ।
औच्चैःश्रवसः[6] । तार्क्ष्यः । आशुः । ब्रध्नः । अरुषः ।
मांश्चत्वः[7] । अव्यथयः[8] । श्येनासः । सुपर्णाः । पतङ्गाः ।
नरः । ह्वार्याणाम्[9] । हंसासः । अश्वाः । इति षड्विंशतिः
रश्वनामानि ॥ १४ ॥

---

१ नभन्वा इति मात्राभेदेन पु० ॥
२ 'ऋतावर्यः' इति पु० ॥
३ पार्वतस्य ऋचन्य' इमौ पा० ॥　　४ स्रवन्त्य' इति पु० ॥
५ एतग्वा इति पु० ॥　　६ 'उच्चैःश्रवस इति पु० ॥
७ मश्वनो मश्वन इति पा० ॥　　८ व्यथ्यय इति पा० ॥
९ 'धायाणाम् इति पाठान्तरम् ॥

हरी इन्द्रस्य । रोहितोऽग्नेः । हरित आदित्यस्य । रासभावश्विनोः । अजाः पूष्णः । पृषत्यो मरुताम् । अरुण्यो गाव उषसाम् । श्यावाः सवितुः । विश्वरूपा बृहस्पतेः । नियुतो वायोः । इति दशाऽदिष्टोपयोजनानि ॥ १५ ॥

भ्राजते । भ्राशते । भ्राश्यति[1] । दीदयति । शोचति । मन्दते । भन्दते । रोचते । द्योतते । ज्योतते । द्युमत् । इत्येकादश ज्वलतिकर्माणि ॥ १६ ॥

जमत् । कल्मलीकिनम् । जञ्जणाभवन् । मल्मलाभवन् । अर्चिः । शोचिः । तपः । तेजः[2] । हरः । घृणिः[3] । शृङ्गाणि । इत्येकादश ज्वलतो नामधेयानि ॥ १७ ॥

गौर्हेमाम्बर स्वः खेदय आताः श्यावी विभावरी वस्तोरद्रिः श्लोकोऽर्णोऽनयोऽश्वो हरीइन्द्रस्य भ्राजते जमदिति सप्तदश ॥

इति निघण्टौ प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

१ ग्लाशायति ग्लाशाते ग्लाशायते इमे पुस्तकान्तरेषु दृश्यन्ते ॥

२ पयः इति च पु० ॥

३ 'हर्यि ; हरिः' इति पाठभेदः ॥

# अथ द्वितीयाध्यायारम्भः ॥

अपः । अप्नः । दंसः । वेपः । वेपः[1] । विष्ट्वी । व्रतम् । कर्वरम् । शक्म[2] । क्रतुः । करूणम्[3] । करणानि । करांसि । करन्ती[4] । करिक्रत् । चक्रत्[5] । कर्त्वम्[6] । कर्तोः । कर्तवे । कृत्वी । धीः । शची । शमी । शिमी । शक्तिः । शिल्पम् । इति षड्विंशतिः कर्मनामानि ॥ १ ॥

तुक् । तोकम् । तनयः[7] । तोक्म । तक्म । शेपः । अप्नः । गयः । जाः । अपत्यम् । यहुः । सूनुः । नपात् । प्रजा । बीजम् । इति पञ्चदशापत्यनामानि ॥ २ ॥

मनुष्याः । नरः[8] । धवाः । जन्तवः । विशः । क्षितयः । कृष्टयः । चर्षणयः । नहुषः[9] । हरयः । मर्याः ।

---

१. 'वेशः, विष्टी' इति पुस्तकान्तर० ॥

२. 'शक्म; शक्मम्' अस्यैव भेदः पु० ॥

३. 'करणम्' इति पु० ॥ ४. 'करन्ति' इति पु० ॥

५. 'चक्रतुः' इति पु० ॥ ६. 'कर्तुम्' इति पाठभेदः पु० ॥

७. 'तनयम्' इति लिङ्गभेदेन क्वचित् पु० ॥

८. 'नराः' इति पुस्तकान्तरेषु ॥

९. 'नहुषाः' इति वचनभेदेन क्वचित् पाठः ॥

मर्त्याः । मर्ताः । व्राताः । तुर्वशाः । द्रुह्यवः । आयवः[1] । यदवः । अनवः । पूरवः । जगतः । तस्थुषः । पञ्चजनाः । विवस्वन्तः । पृतनाः । इति पञ्चविंशतिर्मनुष्यनामानि ॥ ३ ॥

आयती । च्यवाना । अभीशू । अप्नवाना । विनङ्गृसौ । गभस्ती । करस्नौ । बाहू । भुरिजौ । क्षिपस्ती[2] । शक्वरी । भरित्रे । इति द्वादश बाहुनामानि ॥ ४ ॥

अग्रुवः । अण्व्यः[3] । विशः[4] । क्षिपः । शर्याः । रशनाः । धीतयः । अथर्यः[5] । विपः । कक्ष्याः । अवनयः । हरितः[6] । स्वसारः । जामयः । सनाभयः । योक्त्राणि । योजनानि । धुरः । शाखाः । अभीशवः । दीधितयः । गभस्तयः[7] । इति द्वाविंशतिरङ्गुलिनामानि ॥ ५ ॥

वश्मि । उश्मसि[8] । वेति । वेनति । वेमति[9] । वाञ्छति । वष्टि[10] । वनोति । जुषते । हर्यति[11] । आचके ।

उशिक्। मन्यते। छन्त्सत्[1]। चाकनत्। चकमानः। कनति। कानिषत्। इत्यष्टादश कान्तिकर्माणि ॥ ६ ॥

अन्धः[2]। वाजः। पयः। प्रयः[3]। पृक्षः। पितुः। वयः। सुतः[4]। सिनम्[5]। अवः। क्षु[6]। धासिः। इरा। इळा। इषम्। ऊर्क्। रसः। स्वधा। अर्कः। क्षद्म[7]। नेमः। ससम्। नमः। आयुः। सूनृता। ब्रह्म। वर्चः। कीलालम्। यशः। इत्यष्टाविंशतिरन्ननामानि* ॥ ७ ॥

आवयति। भर्वति। बभस्ति। वेति। वेवेष्टि। अविष्यन्। वप्सति। भसथः। बब्धाम्। ह्वरति[8]। इति दशात्तिकर्माणि ॥ ८ ॥

ओजः। पाजः[9]। शवः। तवः। तरः। त्वक्षः[10]। शर्धः। बाधः। नृम्णम्। तविषी। शुष्मम्। शुष्णम्। शूषम्। दक्षः। वीळु। च्यौत्नम्। सहः। यहः। वधः।

---

१. 'छंगनत्' इति पु० ॥  २. 'वाजः' इत्यधिकं क्वचित् पु० ॥
३. 'प्रव' इति क्वचित् पु० ॥
४. 'सुतम्' इति [illegible] पु० ॥
५. 'सीनम्' इति पु० ॥
६. 'क्षुमत् क्षुत्' इत्येतौ क्षु इत्यस्य स्थाने द्वे पुस्तकान्तरेषु ॥
७. 'क्षद्य' इति पु० ॥  ८. 'ह्वलति' इति पु० ॥
९. 'पाजः' इत्यधिकं क्वचित् पुस्तके ॥  १०. 'त्वक्षः' इति पु० ॥

---

* ये २६ नाम हो जाते हैं जबकि अन्ननाम २८ ही परिगणित हैं। गुरुकुल कांगड़ी के १९२५ के संस्करण में कुछ नहीं छपा है। (सं०

वर्गः । वृजनम् । वृक्[1] । मज्मना । पौंस्यानि । धर्णसिः[2] । द्रविणम् । स्यन्द्रासः । शम्बरम् । इत्यष्टाविंशतिर्बलनामानि ॥९॥

मघम् । रेक्णः । रिक्थम् । वेदः । वरिवः । श्वात्रम् । रत्नम् । रयिः । क्षत्रम् । भगः । मीढुम्[3] । गयः । नृम्णम् । द्युम्नम् । तना । वन्धुः । इन्द्रियम् । वसु । रायः । राधः । भोजनम् । मेधा । यशः । ब्रह्म । द्रविणम्[4] । श्रवः । वृत्रम्[5] । ऋतम् । इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

अघ्न्या । उस्रा । उस्रिया । अही । मही । अदितिः[6] । इळा । जगती । शक्वरी । इति नव गोनामानि ॥ ११ ॥

रेळते । हेळते । भामते । भृणीयते[7] । श्रीणाति । श्रेपति । दोधति । वनुष्यति । कम्पते । भोजते । इति दश क्रुध्यतिकर्माणि ॥ १२ ॥

हेळः । हरः । हृणिः[8] । त्यजः । भामः । एहः । ह्वरः[9] । तपुषी । जूर्णिः । मन्युः । व्यथिः । इत्येकादश क्रोधनामानि ॥ १३ ॥

---

१ 'वृक्' इति पाठान्तरम् ॥ २ 'धरुणसि' इति प्रधान पाठ ॥
३ 'मीळ्हम्' इति क्वचित् पु० ॥ ४ 'शर्वः' इत्यधिकं क्वचित् ॥
५ 'सूतम् नित्तम्' इति पु० ॥
६ 'अदितिः' इति पुस्तकान्तरपाठ ॥
७ अस्यैव स्थाने 'हृणीयते' इति क्वचित् पु० ॥
८ 'घृणिः' इति क्व पु० ॥ ९ 'वरः' इति तस्यैव स्थाने पुस्त० ॥

